# पातञ्जलयोगदर्शनम्

वाचस्पतिमिश्रविरचित-तत्त्ववैशारदी-
विज्ञानभिक्षुकृत-योगवार्तिकविभूषित-
व्यासभाष्यसमेतम्

ब्र. गुरुपाद चैतन्यः
शिवानन्दाश्रम
ऋषिकेश

काशीहिन्दूविश्वविद्यालयस्य कला-संकाये
संस्कृतविभागेऽध्यापकेन श्रीनारायणमिश्रेण
टिप्पणीपरिशिष्टादिभिः सह सम्पादितम्




भारतीय विद्या प्रकाशन
वाराणसी—१ ( भारत )

प्रकाशक:—
भारतीय विद्या प्रकाशन
पो० बा० १०८, कचौड़ी गली,
वाराणसी.।

प्रथम संस्करण १९७१

मूल्य सजिल्द २५.००
अजिल्द [redacted].००

मुद्रक :—
दयानन्द 'सतीश'
सीमा प्रेस
ईश्वरगंगी, वाराणसी

# आमुखम्

अध्यात्मविद्यादिपदैरुपनिषदादिषु प्रसिद्धेयं योगविद्या प्रथमं हिरण्य-गर्भेण ऋषीन्प्रत्युपदिष्टा। कोऽयं हिरण्यगर्भ इति त्वद्यापि न निर्णयः। अमुमेव हैरण्यगर्भं योगमाश्रित्य पतञ्जलिः प्रकृतं योगशास्त्रम्प्रणिनायेति सम्प्रदायः।

प्रसिद्धाः कतिपये ग्रन्थकाराः पतञ्जलिनाम्ना, परमस्य योगसूत्रकर्तुः पतञ्जलेः तेषां केनाप्यभेदो भेदो वेति नाद्य यावन्निश्चितम्। अत एव ईसवीयपूर्वे प्रथमे द्वितीये वा शतके इसवीयप्रथमशतके वा योगसूत्राणि रचितानि इति मतमपि संशयारूढमेव।

तस्यास्य योगसूत्रस्य प्रसिद्धं भाष्यम् प्रणिनाय व्यासनामधेयः कश्चन मनीषी। सोऽयं वेदव्यास एवेति परम्परा, भिन्नः कश्चनेति ऐतिहासिकाः। एतद्भाष्यावलोकनेन ज्ञायते यत् एतस्मात्प्रागपि कियन्ति व्याख्यानानि योगसूत्राणामवर्त्तन्तेति, परमद्य नैकमपि तेषामुपलभ्यते।

भाष्यव्यतिरिक्तासु योगसूत्रटीकासु भोजदेवस्य ( ११०० ई० ) राज-मार्तण्डाभिधा वृत्तिः, भावागणेशस्य ( १४०० ई० ) दीपिका, रामानन्दस्य ( १७०० ई० ) मणिप्रभा, नारायणतीर्थस्य ( १८०० ई० ) योगचन्द्रिका, यशोविजयसूरेः ( १८०० ई० ) वृत्तिः, नागेशस्य ( १८०० ई० ) वृत्तिः, अनन्तदेवसदाशिवेन्द्रयोः चन्द्रिका-योगसुधाकराख्ये च वृत्ती प्रकाशिताः सन्ति। अन्या अपि बह्वयो वृत्तयो हस्तलेखसूच्यादिषु दृश्यन्ते।

तदेतेषां सर्वेषां व्याख्यानानां मध्ये व्यासभाष्यं सर्वातिशायीत्यविवादमेव। अस्य दुरूहत्वात् वाचस्पतिमिश्रेण ( ९०० ई० ) तत्त्ववैशारदी, विज्ञान-भिक्षुचरणेन ( १४०० ई० ) च योगवार्त्तिकम् इति व्याख्याद्वयम् अस्य कृतम्। शङ्करकृतं विवरणमपि सम्प्रति प्रकाशितम्। एतेषु तत्त्ववैशारद्याः सुलभत्वात् योगवार्त्तिकोपबृंहितमेव संस्करणीयमासीत्। किन्तु प्रकाशकाऽ-नुरोधेन तत्त्ववैशारद्यपि संयोजिता।

अत्र वार्त्तिकस्य यत्संस्करणमासीत् तत्र महद्वैषम्यं छात्राणां दृष्ट्वा प्रकाशि-तेऽत्र संस्करणे मया यथामति कृतेप्यायासे क्वचिदशुद्धिः सञ्जातैव। यथा :-

१२५ पृष्ठे भाष्ये प्रज्ञाप्रासादमारुह्य इत्यस्य स्थाने प्रज्ञाप्रसादमारुह्य इति, १५८ पृष्ठे वार्त्तिके ज्ञानदग्धैस्तथा क्लेशैः इत्यस्य स्थाने ज्ञानदग्ध-स्तथा क्लेशैः इति, २०६ पृष्ठे वार्त्तिके सदसत्ख्यातिर्बाधाऽबाधाभ्याम् इति सांख्यसूत्रस्थाने सदसद्बाधाऽबाधाभ्याम् इति, २९९ पृष्ठे वार्त्तिके मनूद्धरणे सततघातिनि इत्यस्य स्थाने सततघातिनाम् इति,···परार्थात् स्वार्थसंयमात्पुरुषज्ञानम् (यो० सू० ३।३५ ) इत्यस्य स्थाने सूत्रे, वैशारद्यां वार्त्तिके च·····परार्थत्वात् स्वार्थसंयमात्पुरुषज्ञानम् इति, ३६६ पृष्ठे

वैशारद्याम् नामित्वमनुमीयते इत्यस्य स्थाने नामीत्वमनुमीयते इत्याद्या अंशाः सन्तिष्ठन्ते । अन्या अपि अशुद्धयः सन्ति, ताः संशोध्याः सुधीभिः ।

क्वचित् पाठतारतम्यमपि विचारणीयम् । यथा—वार्त्तिके १२० पृष्ठे अन्योपरागानुपरागसाम्येनेति पाठः, मया च टिप्पण्यामर्थश्चोपपादितः परन्तु अन्यस्यां नागेशवृत्त्यादिषु अर्थोपरागानुपरागसाम्येनेति पाठः । एवम् २०४ पृष्ठे वार्त्तिके "गारुडवैष्णवादिवाक्येभ्यः सत्तासामान्याभावस्यैव पारमार्थिकासत्तात्वसिद्धेः" इति मुद्रितपाठस्थाने......असत्तासामान्याभावस्यैव पारमार्थिकसत्तात्वसिद्धेः इति पाठः स्फुटतरः प्रतीयते । तथापि यथापुस्तकं मया स्थापितम् । यत्र तु नैव कथमप्युपपत्तिर्मया दृष्टा तत्रैवेषत्संशोधनमपि कृतम्, तद्विद्वद्भिः स्थाने स्थाने ज्ञास्यत एवेत्यवैमि ।

तत्त्ववैशारद्याम् १६४ पृष्ठे २७ पंक्तौ "य उक्त इति ।" इत्यतः परम् एको भव एकभवः, पूर्वकाल इत्यादिना समासः इत्यंशो न मुद्रितो भ्रमादित्यपि संशोध्यः पाठकैरेवास्मदनुग्रहाय ।

अन्ते परिशिष्टरूपेण सूत्रसूची, तत्र मुद्रितटीकागताः पाठभेदाः, व्यासभाष्याद्युद्धरणानुक्रमणी, तत्र च उद्धरणानां यथासम्भवमाकरग्रन्थसंकेतश्च विहितः । पुराणवाक्यानां क्वचिच्छ्रुतिवाक्यानाञ्च पाठभेदः सम्प्रति दृश्यते, तत्र श्रुतिवाक्यानां पाठभेदो विचारणीयः । मया तु पाठभेदादयो न संकेतिताः ग्रन्थाकारवृद्धिभीतेन प्रकाशकेन सामञ्जस्यं विदधता । एतदेव कारणं यत्संकलिताऽपि बृहती भूमिका न प्रकाशिताऽत्र ग्रन्थे ।

यत्र च अनेकग्रन्थेभ्योऽनेकस्थानेभ्यो वैकस्मादेव ग्रन्थाद् वाक्यानि उद्धृतानि तत्र उद्धरणाद्यांशान्ते सूच्याम् पंक्तीनां संख्याऽपि मया प्रदत्ता येन पाठकाः सम्यगवच्छेयुः यत्कियतीनां पंक्तीनाम् एतदुद्धरणस्थानसंकेतादि कृतमिति । परन्त्वेष क्रमो न स्पष्टीकृतः तत्त्ववैशारद्युद्धरणेऽल्पत्वात् ।

अन्ते च अस्मदादरणीयेभ्यः श्रीमद्भ्यो दिनेशचन्द्रगुह-विश्वनाथभट्टाचार्य - रामायणप्रसादद्विवेदिमहाशयेभ्यः सोत्साहमुपकारकरेभ्यो विद्वद्भ्यः कृतज्ञताप्रकाशनमुचितमेव । गुरूणां कृते तु मौनावलम्बनमेव वरम् । भारतीविद्याप्रकाशनाध्यक्षः 'सीमाप्रेस' व्यवस्थापकमहाशयश्च प्रकाशने मुद्रणे च कृतश्रम इति एताभ्यामपि मदीया धन्यवादाः ।

विश्वसिमि यन्महानुभावाः सर्वा अशुद्धीरुपेक्ष्य माम् , भारतीविद्याप्रकाशनाध्यक्षं च अनुग्रहीष्यन्ति ।

काशीहिन्दूविश्वविद्यालयः, वाराणसी । २४।३।१९७१ ई०

इति निवेदयति
श्रीनारायण मिश्रः

श्रीगणेशाय नमः

# पातञ्जलयोगसूत्रम्

## तत्त्ववैशारदी-योगवार्तिकविभूषितव्यासभाष्यसमेतम्

### तत्र समाधिपादः प्रथमः ।

---

अथ योगानुशासनम् ॥१॥

यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधानुग्रहाय[1]
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी ।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोऽहीशः स वोऽव्यात्सितविमलतनुर्योगदो योगयुक्तः ॥ १ ॥

अथेत्ययमधिकारार्थः । योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् । योगः समाधिः । स च सार्वभौमश्चित्तस्य धर्मः ।

क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तस्य भूमयः । तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते । यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति स संप्रज्ञातो योग इत्याख्यायते । स च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इत्युपरिष्टात्प्रवेदयिष्यामः । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः ॥१॥

---

१. क्वचित् श्लोकोयं नोपलभ्यते । अस्य प्रक्षिप्तत्वे उपन्यस्ता युक्तयश्चाभासा इति नास्य सत्त्वाऽसत्त्वान्यतरनिर्णयस्ताभिः, किन्तु बहुत्र पाठात् सत्त्वमेव सम्भावनाविषयम् ।

## तत्त्ववैशारदी ।

नमामि जगदुत्पत्तिहेतवे वृषकेतवे ।
क्लेशकर्मविपाकादिरहिताय हिताय च ॥१॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधीयते ॥२॥

इह हि भगवान्पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य संक्षेपतस्तात्पर्यार्थं प्रख्यापयितुं प्रवृत्त्यङ्गं श्रोतुश्च सुखावबोधार्थमाचिख्यासुरादाविदं सूत्रं रचयांचकार–अथ योगानुशासनम्। तत्र प्रथमावयवमथशब्दं व्याचष्टे–अथेत्ययमधिकारार्थः। अथैष ज्योतिरितिवत्, न त्वानन्तर्यार्थः। अनुशासनमिति हि शास्त्रमाह-अनुशिष्यतेऽनेनेति व्युत्पत्त्या। न चास्य शमदमाद्यनन्तरं प्रवृत्तिरपि तु तत्त्वज्ञानचिख्यापयिषानंतरम्। जिज्ञासाज्ञानयोस्तु स्यात्। यथाम्नायते–'तस्मात् शान्तो दान्त उपरतः तितिक्षुः समाहितो[1] भूत्वाऽऽत्मन्येवात्मानं पश्येत्' इति। शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानंतर्यस्य च संभवेऽपि नाभिधानम् शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात् प्रामाणिकत्वे[2] योगानुशासनस्य तदभावेऽप्युपेयत्वादप्रामाणिकत्वे च तद्भावेऽपि हेयत्वात्। एतेन तत्त्वज्ञानचिख्यापयिषयोरानन्तर्याभिधानं परास्तम। अधिकारार्थत्वे तु शास्त्रेणाधिक्रियमाणस्य प्रस्तूयमानस्य योगस्याभिधानात्सकलशास्त्रतात्पर्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्तितश्च भवतीति। निःश्रेयसस्य हेतुः समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धम्। ननु किं सर्वसंदर्भगतोऽथशब्दोऽधिकारार्थः, तथा सति अथातो ब्रह्मजिज्ञासा इत्यादावपि प्रसङ्ग इत्यत आह-अयमिति। ननु हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेर्योगशास्त्रकर्तृत्वमित्याशङ्क्य सूत्रकारेणानुशासनमित्युक्तम्। शिष्टस्यानुशासनं न तु शासनमित्यर्थः। यदायमथशब्दोऽधिकारार्थस्तदैष वाक्यार्थः संपद्यत इत्याह–योगानुशासनं शास्त्रमधि-

---

१. अत्र वाजसनेयिनः श्रद्धावित्तो भूत्वेति पठन्ति। अतः श्रद्धाया अपि गुणोपसंहारन्यायेन सङ्ग्रहः। अतएव शमादिषट्कशब्दप्रयोगः शास्त्रे दृश्यते।

२. एतद्ग्रन्थार्थस्फोरणाय सर्वदर्शनसंग्रहस्य पातञ्जलदर्शनप्रकरणप्रारम्भोऽवलोकनीयः।

कृतमिति। ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो न तु शास्त्रमित्यत आह—वेदितव्यमिति। सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः। स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः। करणगोचरश्च व्युत्पादकस्य व्यापारो न कर्मगोचर इति कर्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्याधिकृतत्वं वेदितव्यम्। शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः। अधिकारार्थस्य चाथशब्दस्यान्यार्थनीयमानोदकुम्भदर्शनमिव [1] श्रवणं मङ्गलायापि कल्पत इति मंतव्यम्।

शब्दसंदेहनिमित्तमर्थसंदेहमपनयति—योगः समाधिरिति। 'युज समाधौ' इत्यस्माद्व्युत्पन्नः समाध्यर्थो न तु 'युजिर् योगे' इत्यस्मात्संयोगार्थ इत्यर्थः। ननु समाधिरपि वक्ष्यमाणस्याङ्गिनो योगस्याङ्गम्, न चाङ्गमेवाङ्गीत्यत आह—स च सार्वभौमः। चस्त्वर्थोऽङ्गादङ्गिनं[2] भिनत्ति। भूमयोऽवस्था वक्ष्यमाणा मधुमती-मधुप्रतीका-विशोका-संस्कारशेषास्ताश्चित्तस्य। तासु सर्वासु विदितः सार्वभौमश्चित्तवृत्तिनिरोधलक्षणो योगः। तदङ्गं तु समाधिर्नैवंभूतः। व्युत्पत्तिनिमित्तमात्राभिधानं चैतद्योगः समाधिरिति अङ्गाङ्गिनोरभेदविवक्षामात्रेण। प्रवृत्तिनिमित्तं तु योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः। वृत्तयो ज्ञानान्यात्माश्रयाण्यतस्तन्निरोधोऽप्यात्माश्रय एवेति ये पश्यंति तन्निरासायाह—चित्तस्य धर्म इति। चित्तशब्देनांतःकरणं बुद्धिमुपलक्षयति। न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति, बुद्धिस्तु भवेदिति भावः[3]।

---

१. तथा च स्मृतिः—"ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा। कण्ठं भित्त्वा विनर्यातौ तस्मान्माङ्गलिकावुभौ"॥ इति
तत्रोच्चारणमात्रेण मङ्गलत्वमिति वार्त्तिकोक्तेः संकुचितत्वम्, उच्चारयितृमात्र-फलकत्वात्। श्रवणस्य मङ्गलप्रयोजनत्वे तु मिश्रोक्तेः उच्चारयित्रा सह शिष्यस्यापि श्रोतुः समावेश इति ध्येयम्।

२. अङ्गम् = तृतीयाध्यायतृतीयसूत्रप्रतिपाद्यम् अष्टममङ्गं योगस्य, अङ्गी = सम्प्रज्ञातोऽसम्प्रज्ञातश्च, उभयोरपि योगशब्देनाभिधानस्य वक्ष्यमाणत्वात्। अङ्गं सम्प्रज्ञातसमाधिः, अङ्गी असम्प्रज्ञातसमाधिरिति कस्यचित् व्याख्यानम्।

३. प्रागभाव-प्रध्वंसयोः प्रतियोगिसमानाधिकरणत्वमिति तार्किकपद्धत्या आत्मनः तथात्वे "उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्" इति न्यायेन आत्मनः कूटस्थत्वं व्याहन्येतेति ग्रन्थाशयः।

स्यादेतत्—सार्वभौमश्चे योगो हंत भोः क्षिप्तमूढविक्षिप्ता अपि चित्तभूमयः[1]। अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्रापि योगत्वप्रसङ्ग इत्याशङ्क्य हेयोपादेयभूमीरुपन्यस्यति—क्षिप्तमित्यादि। क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम्। मूढं तु तमःसमुद्रेकान्निद्रावृत्तिमत्। क्षिप्ताद्विशिष्टं विक्षिप्तम्। विशेषोऽस्थेमबहुलस्य कादाचित्कः स्थेमा। सा चास्यास्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा। एकाग्रमेकतानम्। निरुद्धसकलवृत्तिक संस्कारमात्रशेष चित्तं निरुद्धम्। तत्र क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्येणापि निःश्रेयसहेतुभावाभावात्तद्रूपघातकत्वाच्च योगपक्षाद्दूरोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम्। विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः संभाव्येत योगत्वमिति निषेधति—तत्र इति। विक्षिप्ते चेतसि समाधिः कादाचित्कः सद्भूतविषयश्चित्तस्य स्थेमा न योगपक्षे वर्तते। कस्मात्? यतस्तद्विपक्षविक्षेपोपसर्जनीभूतः। विपक्षवर्गान्तर्गतस्य हि स्वरूपमेव दुर्लभम्; प्रागेव कार्यकरणम्। न खलु दहनान्तर्गतं बीजं त्रिचतुरक्षणावस्थितमुप्तमप्यङ्कुराय कल्पत इति भावः। यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्हीत्यत आह—यस्त्वेकाग्रे चेतसीति। भूतमिति समारोपितमर्थं निवर्तयति। निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तम्—सदिति[2]। शोभनं नितान्ताविर्भूतसत्त्वम्। तमःसमुद्रेकस्त्वशोभनस्तस्य क्लेशहेतुत्वादिति। द्योतनं हि तत्त्वज्ञानमागमाद्वानुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति, द्विचन्द्रादिङ्मोहादिष्वनुच्छेदकत्वादत आह—प्रेति। प्रशब्दो हि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति। अविद्यामूलत्वादस्मितादीनां क्लेशानां विद्यायाश्चाविद्योच्छेदरूपत्वाद्विद्योदये चाविद्यादिक्लेशसमुच्छेदो विरोधित्वात्कारणविनाशाच्चेत्याह—क्षिणोति चेति। स चेति। अत एव कर्मरूपाणि बन्धनानि श्लथयति। कर्म चात्रापूर्वमभिमतम्, कार्ये कारणोपचारात्। श्लथयति स्वकार्यादवसादयति। वक्ष्यति हि सति मूले तद्विपाकः इति। किं च निरोधमभिमुखं करोत्यभिमुखीकरोति। स च संप्रज्ञातश्चतुष्प्रकार इत्याह—स चेति। असंप्रज्ञातमाह—

---

१. संस्कारवशात् यस्यामवस्थायां चित्तं सन्तिष्ठते सा चित्तभूमिः।

२. तथा च अभावप्रत्ययालम्बनायाः निद्रावृत्तेर्व्यावृत्तिः सिद्ध्यतीति भावः।

सर्ववृत्तीति । रजस्तमोमयी किल प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिमुपादाय संप्रज्ञाते निरुद्धा । असंप्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः । तदिह भूमिद्वये समाप्ता या मधुमत्यादयो भूमयस्ताः सर्वास्तासु विदितः सार्वभौम इति सिद्धम् ॥ १ ॥

योगवार्त्तिकम् ।

यस्मिन्मात्ररसोऽपि नित्यविमलोपाधेर्गुणैरीश्वरो
हेयैः क्लेशमुखैर्गुणैर्विरहितो मुक्तः सदा निर्गुणः ।
सोऽस्मान् बुद्धिगुणैः स्वयं निगडितान् स्वांशान् कृपासागरो
दीनान्मोचयतु प्रभुर्गुणमयं पाशं दहल्लीलया ॥१॥

श्रीपातञ्जलभाष्यदुग्धजलधिर्विज्ञानरत्नाकरो-
वेदव्यासमुनीन्द्रबुद्धिखनितो योगीन्द्रपेयामृतः ।
भूदेवैरमृतं तदत्र मथितुं विज्ञानगिर्ज्ञैरिह
श्रीमद्वार्त्तिकमन्दरो गुरुतरो मन्थानदण्डोऽर्प्यते ॥२॥

सर्ववेदार्थसारोऽत्र वेदव्यासेन भाषितः ।
योगभाष्यमिषेणातो मुमुक्षूणामिदं गतिः ॥३॥

गङ्गाऽऽद्याः सरितो यद्वदब्धेरंशेषु संस्थिताः ।
सांख्यादिदर्शनान्येवमस्यैवांशेषु कृत्स्नशः ॥४॥

निर्विघ्नग्रन्थसमाप्तये योगप्रवर्त्तकमनन्तमीश्वरं स्मरन् शिष्याणां शास्त्रग्रहणानुष्ठानादावप्यप्रतिबन्धं तत एव प्रार्थयते — यस्त्यक्त्वेति । यः स्वस्याद्यरूपं शेषाख्यं त्यक्त्वा स्वांशैस्ततो विभक्तो भूत्वा लोकानुग्रहार्थं बलरामादिरूपेणाविर्भवति स वो युष्मान् शिष्यान् पालयेत् शास्त्रार्थग्रहणादिप्रतिबन्धं निवारयत्वित्यर्थः । शेषं सुगमम् ।

"अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति"
"यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा"
"तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः" इत्यादिश्रुतिषु,
"मुक्तिर्योगात्तथा योगः सम्यग्ज्ञानान्महीयते"
"तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः"—

इत्यादिस्मृतिषु च योगो मोक्षहेतुतया विहितः। तत्र योगः किंस्वरूपः, किमुपायः, केन वा द्वारेण ज्ञानमोक्षयोः कारणमित्यादिकं मुमुक्षूणां विविदिषितं भवति। ब्रह्ममीमांसासांख्यादिषु च ज्ञानमेव विचारितं बाहुल्येन, ज्ञानसाधनमात्रस्तु योगः सङ्क्षेपतः; ज्ञानजन्ययोगस्तु सङ्क्षेपतोऽपि तेषु नोक्तोऽतोऽतिविस्तरेण द्विविधं योगं प्रतिपिपादयिषुर्भगवान् पतञ्जलिः शिष्यावधानायादौ योगानुशासनं शास्त्रमारभ्यतया प्रतिज्ञातवान्—

अथ योगानुशासनम्। तदिदं सूत्रमारभ्य समग्रं शास्त्रं सर्वलोकहिताय भगवान् बादरायणो व्याचष्टे—अथेत्ययमधिकारार्थ इत्यादिना। अधिकारशब्दो योगरूढतया आरम्भण एव मुख्य इति शास्त्रस्याधिकार्यत्वं मुख्यमेवास्ति। यत्र चार्थस्याधिकार्यत्वमुच्यते, यथा-अथैष ज्योतिः इत्यादौ, तत्राधिकार्यशास्त्रविषयतया गौणं तदित्याशयः। एतेन शास्त्रस्यानधिकार्यत्वमनिरूप्यत्वादित्यपास्तं प्रकृतभाष्यविरोधादिति। प्रश्नाद्यर्थकत्वमथशब्दस्य किं कुत्रापि नास्तीत्याशङ्कानिरासायोक्तमयमिति। अधिकारार्थोऽधिकारवाचक इत्यर्थः। अथ शब्दस्य चोच्चारणमात्रेण मङ्गलत्वमपि बोध्यम्। शिष्टस्य शासनमनुशासनं तेन शास्त्रस्य गुरुमूलकतया सूत्रकारेण प्रामाण्यं दर्शितम्—

हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः इति—

योगियाज्ञवल्क्येन हिरण्यगर्भस्यादिगुरुत्वबोधनादिति। सूत्रवाक्यार्थमुपसंहरति—योगस्यानुशासनं शास्त्रमधिकृत वेदितव्यमिति। शिष्यैरिति शेषः। वेदितव्यमिति पूरणेन सूत्रस्य शिष्यावधानार्थकत्वं सूचितम्। योगस्य च फलं सूत्रभाष्ययोः स्थाने स्थाने वक्ष्यमाणं मयोत्तरसूत्रावतारिकायामपि सङ्क्षेपाद्वक्ष्यते। योगलक्षणपरतया द्वितीयसूत्रमवतारयिष्यति। तत्र युज समाधाविति योगलक्षणस्य प्रसिद्धत्वाल्लक्षणान्तराकाङ्क्षैव नास्तीत्याशङ्कां तस्यातिव्याप्तत्वेनादावपाकरोति—योगः समाधिः, स च सार्वभौमश्चित्तस्य धर्मः इति। युज समाधावित्यनुशासनतः प्रसिद्धो योगः समाधिः चित्तवृत्तिनिरोधः, स च सार्वभौमः सर्वासु वक्ष्यमाणासु क्षिप्ताद्यवस्थासु साधारणश्चित्तस्य धर्मः स्वाभाविको जलस्य द्रवत्ववत्। क्षिप्ताद्यवस्थायामपि हि यत्किंचिद्वृत्तिनिरोधोऽस्त्येवेति। तथा चालक्ष्यास्ववस्थासु तल्लक्षणमतिव्याप्तमिति शेषः।

कास्ताः सर्वाः चित्तभूमय इत्याकाङ्क्षायामाह—क्षिप्तमित्यादि। क्षिप्तं रजसा विषयेष्वेव वृत्तिमद्, मूढं तमसा निद्राऽऽदिवृत्तिमत्, क्षिप्ताद्विशिष्टं विक्षिप्तम् सत्त्वाधिक्येनसमादधदपि चित्तं रजोमात्रयाऽन्तरान्तरा विषयान्तरवृत्तिमद्, एकस्मिन्नेव विषयेऽग्रं शिखा यस्य चित्तदीपस्येत्येकाग्रं विशुद्धसत्त्वत-

यैकस्मिन्नेव विषये वक्ष्यमाणावधीकृतकालपर्यन्तमचञ्चलं निवातस्थदीपवत्। तथा च क्षिप्तादित्रयेऽपि किंचिदैकाग्र्यसत्त्वेऽपि तत्र नातिप्रसङ्गः। निरुद्धं च निरुद्धसकलवृत्तिकं संस्कारमात्रशेषमित्यर्थः। रजोधर्मस्य रागादेः प्रतिघातादेव लोकानां तमोधर्मे विषादादिदृश्यत इति क्षिप्तात्पूर्वत्र मूढस्योपन्यासः। उक्तातिव्याप्तिं प्रतिपादयितुमुक्तभूमिषु लक्ष्यालक्ष्यविभागं करोति—**तत्र विक्षिप्त इत्यादिना**। तत्र तासु पञ्चसु मध्ये। विक्षिप्ते चेतसि वर्तमानः समाधिरल्पो बहुलविक्षेपशेषीभूतत्वान्न योगपक्षे योगमध्ये प्रविशति, क्लेशहान्यहेतुत्वात्, सुतरां तु क्षिप्तमूढयोश्चित्तयोर्वर्त्तमानौ समाध्यभ्यासावित्याशयः। अतो न क्षिप्तमूढभूम्योरलक्ष्यत्वाप्रतिपादनेन न्यूनतेति। विक्षिप्तमुखेनाद्यभूमित्रयस्यालक्ष्यत्वमुक्त्वाऽन्त्यभूमिद्वयमेव लक्ष्यमित्याह—**यस्त्वेकाग्र इति**। यस्तु समाधिरेकाग्रे चेतसि वर्तमानोऽर्थं ध्येयं वस्तु सद्भूतं परमार्थभूतं प्रकर्षेण द्योतयति साक्षात्कारयति ततश्च क्लेशानविद्याऽऽदीन् पञ्च क्षिणोति ततोऽपि च कारणोच्छेदाद्धर्माधर्मरूपाणि बन्धनानि बुद्धिपुरुषयोर्बंधकारणानि श्लथयति अदृष्टो-[1] त्पादनाक्षमाणि करोति तथा निरोधमसंप्रज्ञातयोगमभिमुखं प्रत्यासन्नं करोति परवैराग्यजननेनेति शेषः,स समाधिः संप्रज्ञातो योग इति कथ्यत इत्यर्थः। सम्यक् प्रज्ञायते साक्षात्क्रियते ध्येयमस्मिन्निरोधविशेषरूपे योग इति संप्रज्ञातो योगः। यद्यपि समाधिशब्देनैकाग्रताऽतिशयरूपं निरोधद्वयरूपयोगद्वयस्याङ्गमेव परिभाषिष्यते तथापि योगद्वयमङ्गाङ्गिनोरभेदविवक्षयैव समाधिशब्देनोक्तमेवमुत्तरोत्तरसूत्रेऽपि बोध्यम्। स च संप्रज्ञातश्चतुर्विध इत्याह-स चेति। न च वितर्कानुगतादित्रिके साक्षात्कारजनकत्वादिकं साक्षान्नास्त्यविद्यालेशसंपर्कादिति वाच्यम्, सवितर्कादिक्रमेणैव साक्षात्कारवृद्ध्या चरमभूमिकायामृतम्भरप्रज्ञोदयेन भूमिकाचतुष्टय एव साक्षात्कारसंबन्धादिति। निरुद्धभूमेरपि लक्ष्यत्वमाह—**सर्ववृत्तीति**। सम्प्रज्ञातकालीना साक्षात्काररूपिणी या वृत्तिः तस्या अपि वक्ष्यमाणपरवैराग्येण निरोधे जायमाने त्वसम्प्रज्ञातयोग इत्यर्थः। वृत्तिनिरोधश्च चित्तस्य वृत्तिसंस्कारशेषावस्था, अभावस्याधिकरणावस्थाविशेषमात्ररूपत्वाद्, निरुध्यन्तेऽस्यामवस्थायामिति व्युत्पत्तेर्वा। सा चावस्था संस्कारमात्रैः परिणामधारा, निरोधकाले संस्कारतारतम्यरूपस्यैव चित्तपरिणामस्य सूत्रभाष्याभ्यां वक्ष्यमाणत्वादिति। ननु वृत्तिनिरोधो वृत्त्यभावमात्रमेकाग्रताविशेषो वा, निरोधस्याभावमात्रत्वे वक्ष्यमाण-संस्कारजनकत्वानुपपत्तेरेकाग्रतामात्ररूपत्वे समाधिरूपादङ्गात् सम्प्रज्ञाताच्च भेदानुपपत्तेः,

---

१—अदृष्टफलेत्यर्थः।

उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तास्त्यजेत् ।
बोधेन ज्ञानमालोक्य तथा बोधं परित्यजेत्

इत्यादिस्मृतिषु यावद्धृदि गतं क्षयमिति पूर्वोक्तश्रुतौ चासम्प्रज्ञातस्य सकलवृत्तिशून्यत्वश्रवणाच्च ।

ननु सम्प्रज्ञातासम्प्रज्ञातयोर्योगयोर्निरोधरूपयोः किं प्रयोजनम् योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेरितिसूत्रेण योगाङ्गस्यैव ज्ञानहेतुतया वक्ष्यमाणत्वात् संप्रज्ञातयोगकाले ज्ञानस्योत्पत्तेरेव शास्त्रेष्ववगमाद्, न तु तद्धेतुतायाः; एककालकत्वेन हेतुहेतुमद्भावासम्भवाच्च । अस्तु वा विषयान्तरसंचाराख्यप्रतिबन्धनिवृत्तिरूपतया ज्ञानहेतुत्वं सम्प्रज्ञातयोगस्य,[1] क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः इत्यागामिसूत्राच्च; न त्वसम्प्रज्ञातयोगस्यापि, तस्य ज्ञानजन्यत्वाद् । न च ज्ञानोत्पत्त्यनन्तरं मोक्षायान्यत्साधनमपेक्षणीयम् तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इत्यादिश्रुतिभिरन्यनिरपेक्षाज्ज्ञानस्य मोक्षहेतुत्वसिद्धेरविद्याकामकर्मादिनिवृत्तौ हेत्वभावेन पुनः संसारानुपपत्तेश्च ।

अत्रोच्यते–ज्ञाने जातेऽपि प्रारब्धकर्मणा देहधारणस्यावश्यकत्वेन तदानीमपि बाह्याभ्यन्तरवृत्तिभिर्यद् दुखं न जायत एतदप्यन्ततो योगद्वयस्य फलमस्त । तथा हि वक्ष्यति भाष्यकारः—सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः, अत एताः सर्वाः वृत्तयो निरोद्धव्या इति । किंच ज्ञानस्य यथा कर्म क्षयहेतुत्वमस्ति तथा योगस्यापि,

विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि ।
प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिराद्

इत्यादिवाक्यशतेभ्यः । तथा च कर्मक्षयद्वारा ज्ञानस्येवासंप्रज्ञातयोगस्यापि मोक्षहेतुत्वं सिद्धम् । तत्र चासंप्रज्ञातयोगेनाखिलसंस्कारदाहकेन प्रारब्धकर्माप्यतिक्रम्यत इति ज्ञानाद्विशेषः । ज्ञानस्य हि प्रारब्धनाशकत्वे बाधिकाऽस्ति : तस्य तावदेव चिरमित्यादिश्रुतिर्जीवन्मुक्तिश्रुतिस्मृतयश्च । योगस्य प्रारब्धनाशकत्वे बाधकं नास्ति प्रत्युत दग्धकर्मचयोऽचिरादित्येव स्मर्यते । अतः प्रारब्धमपि कर्म कर्मविपाकोक्तप्रायश्चित्तादिव-

---

१. एककालिकत्ववर्णनं च आशूत्तरक्षणभावित्वेन साधारणानुभव - विषयत्वाभावज्ञापनायेति तात्पर्यम् ।

देवातिक्रम्य झटिति मोचनमेव योगस्य फलम्। अन्यच्च[1] योगद्वयेनाखिलसंस्कारक्षये भोगसंस्काराख्यसहकार्यभावात् प्रारब्धं कर्मापि यत्फलाक्षमं भवति इदमपि योगफलम्। तदुक्तं मोक्षधर्मे—

नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम् इति।

बलं प्रारब्धस्याप्यतिक्रमेण स्वेच्छया शीघ्रमोक्षहेतुः।

अपि च वृत्तिनिरोधात्मको योग एव दुःखनिवृत्त्यात्मकमोक्षे साक्षाद्धेतुः, पुरुषे दुःखस्य चित्तवृत्त्यौपाधिकत्वाद्। उपाधिनिवृत्तिश्चौपाधिकनिवृत्तौ चरमकारणमतो ज्ञानेन न योगस्यान्यथासिद्धिः, ज्ञानवैराग्यकर्मक्षयादीनां वृत्तिनिरोधाख्यचरमकारणद्वारैव दुःखात्यन्तोच्छेदहेतुत्वात्। वृत्त्यत्यन्तनिरोधस्तु चरमासंप्रज्ञाते भवति, यत्र संस्कारस्यात्यन्तक्षयेण चित्तस्य विलयान्मोक्षो भवति। तथा च द्वार-द्वारिभावेनापि ज्ञानस्येव संप्रज्ञातयोगस्यापि मोक्षहेतुत्वं सिद्धम्। असंप्रज्ञातयोगस्य च साक्षान्मोक्षहेतुत्वं तदा द्रष्टुः स्वरूपेऽवस्थानमिति सूत्रकारः स्वयं वक्ष्यति,

मुक्तिर्हित्वाऽन्यथाभावं स्वरूपेण व्यवस्थितिः

इत्यादिवाक्यैरात्यन्तिकस्य स्वरूपावस्थानस्यैव मोक्षत्वादिति दिक् ॥१॥

तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते—

योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

सर्वशब्दाग्रहणात्संप्रज्ञातोऽपि योग इत्याख्यायते। चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात्त्रिगुणम्।

प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति। तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति। तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं[2] भवति। तत्परं प्रसंख्यानमित्याचक्षते ध्यायिनः।

---

१—जीवन्मुक्तिप्रतिपादकप्रमाणविरोधपरिहारायाशयमाविष्करोति — अन्यच्चेत्यादिना।

२. सम्प्रज्ञातस्यैव पराकाष्ठा 'धर्ममेघः' इति वक्ष्यते।

चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च, सत्त्वगुणात्मिका चेयम्, अतो विपरीता विवेकख्यातिरिति। अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि। तदवस्थं संस्कारोपगं भवति। स निर्बीजः समाधिः। न तत्र किञ्चित्संप्रज्ञायत इत्यसंप्रज्ञातः। द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

तत्त्ववैशारदी

द्वितीयं सूत्रमवतारयति—तस्य लक्षणेति। तस्येति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति। योगश्चित्तवृत्तिनिरोधः। निरुध्यन्ते यस्मिन्प्रमाणादिवृत्तयोऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः। ननु संप्रज्ञातस्य योगस्याव्यापकत्वादलक्षणमिदम्। अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिरित्यत आह—सर्वशब्दाग्रहणादिति। यदि सर्वचित्तवृत्तिनिरोध इत्युच्येत भवेदव्यापकं संप्रज्ञातस्य। क्लेशकर्मविपाकाशयपरिपन्था चित्तवृत्तिनिरोधस्तु तमपि[1] संगृह्णाति, तत्रापि राजसतामसचित्तवृत्तिनिरोधात्तस्य च तद्भावादित्यर्थः। कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसबन्धः, किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्या इत्याशङ्क्य प्रथम तावदवस्थासंबन्धहेतुमुपन्यस्यति—चित्तं हीति। प्रख्याशीलत्वात्सत्त्वगुणम्। प्रवृत्तिशीलत्वाद्रजोगुणम्। स्थितिशीलत्वात्तमोगुणम्। प्रख्याग्रहणमुपलक्षणार्थम्। तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते। प्रवृत्त्या च परितापशोकादयो राजसाः, प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः। स्थितिग्रहणाद्गौरवावरणदैन्यादय उपलक्ष्यन्ते। एतदुक्त भवति—एकमपि चित्तं त्रिगुणनिर्मिततया गुणानां च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणाम सदनेकावस्थमुपपद्यत इति।

क्षिप्ताद्या एव चित्तस्य भूमीर्यथासंभवमवान्तरावस्थाभेदवतीरादर्शयति—प्रख्यारूपं हीति। चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम्। तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम्। तत्र चित्तं सत्त्वात् किञ्चिदूने रजस्तमसी यदा मिथः समे च भवतस्तदैश्वर्यं च विषयाश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तम्। सत्त्वप्राधान्यात्खलु चित्तं तत्त्वे प्रणिधित्सदपि तत्त्वस्य तमसा पिहितत्वादणिमादिकमैश्वर्यमेव तत्त्वमभिमन्यमान तत्प्रणिधित्सति प्रणिधत्ते च क्षणम्। अथ रजसा क्षिप्यमाण तत्राप्यलब्धस्थितिविशेषात्तत्प्रियमात्रं

---

१. तथा च क्लेशकर्माशयविपाकपरिपन्थित्वे सति चित्तवृत्तिनिरोधत्वं योगलक्षणम्। तच्चोभय साधारणमित्याह—तत्रापि इति। सम्प्रज्ञातेऽपीत्यर्थः। परिपन्थित्वं विरोधित्वम्।

भवति। शब्दादिषु पुनरस्य स्वरसवाही प्रेमा निरूढ एव। तदनेन विक्षिप्तं चित्तमुक्तम्। क्षिप्तं चित्तं दर्शयन्मूढमपि सूचयति—**तदेव तमसेति**। यदा हि तमो रजो विजित्य प्रसृतं तदा चित्तसत्त्वावरकतमःसमुत्सारणेऽशक्तत्वाद्रजसस्तमःस्थगितं चित्तमधर्माद्युपगच्छति। अज्ञानं च विपर्ययज्ञानमभावप्रत्ययालम्बनं च निद्राज्ञानमुक्तम्। ततश्च मूढावस्थापि सूचितेति। अनैश्वर्यं सर्वत्रेच्छाप्रतीघातः। अधर्मादिव्याप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्याण्युपगच्छतीत्याह—**प्रक्षीणेत्यादि**। मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्। अत एव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानम्। तथापि न धर्मायैश्वर्याय च कल्पते, प्रवृत्त्यभावादित्यत आह—**अनुविद्धं रजोमात्रया**। रजसः प्रवर्तकत्वादस्ति धर्मादिप्रवृत्तिरित्यर्थः। तदनेन संप्रज्ञातसमाधिसंपन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं संगृहीतम्। संप्रत्यतिक्रान्तभावनीयस्य **ध्यायिन**श्चतुर्थस्य चित्तावस्थामाह—**तदेव**। चित्तं रजोलेशान्मलादपेतमत एव स्वरूपप्रतिष्ठम्। अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमोमलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठस्य विषयेन्द्रियप्रत्याहृतस्यानवसिताधिकारतया च कार्यकारिणो विवेकख्यातिः परं कार्यमवशिष्यत इत्याह—**सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति**। **धर्ममेघश्च** वक्ष्यते। अत्रैव योगिजनप्रसिद्धिमाह—**तदिति**। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्यन्तं परं प्रसंख्यानमित्याचक्षते ध्यायिनः। चित्तसामानाधिकरण्यं च धर्मधर्मिणोरभेदविवक्षया[1] द्रष्टव्यम्।

विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुतां च विवेकख्यातेर्दर्शयति—**चितिशक्तिरित्यादि**। सुखदुःखमोहात्मकत्वमशुद्धिः। सुखमोहावपि हि विवेकिनं दुःखाकुरुतः। अतो दुःखवद्धेयौ। तथातिसुन्दरमप्यन्तवद्दुनोति। तेन तदपि हेयमेव विवेकिनः। सेयमशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स्त इत्युक्तम्—**शुद्धा चानन्ता चेति**। ननु सुखदुःखमोहात्मकशब्दादीनियं चेतयमाना तदाकारापन्ना कथं विशुद्धा, तदाकारपरिग्रहपरिवर्जने च कुर्वती कथमनन्तेत्यत उक्तम्—**दर्शितविषयेति**। दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता। भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत, किं तु बुद्धिरेव विषयाकारेण परिणता सती अत-

1. सत्त्वपुरुषान्यताख्यातिर्धर्मः, चित्तं धर्मी।

दाकारायै चितिशक्त्यै विषयमादर्शयति । ततः पुरुषश्चेतयत इत्युच्यते । ननु विषयाकारां बुद्धिमनारूढायाश्चितिशक्तेः कथं विषयवेदनम्, विषयारोहे वा कथं न तदाकारापत्तिरित्यत उक्तम्—अप्रतिसंक्रमेति । प्रतिसंक्रमः संचारः । स चितेर्नास्तीत्यर्थः । स एव कुतोऽस्या नास्तीत्यत उक्तम्—अपरिणामिनीति । न चितेस्त्रिविधोऽपि धर्मलक्षणावस्थालक्षणः परिणामोऽस्ति, येन क्रियारूपेण परिणता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः । असंक्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते[1] । तत्सिद्धं चितिशक्तिः शोभनेति । विवेकख्यातिस्तु बुद्धिसत्त्वात्मिकाऽशोभनेत्युक्तम्—अतश्चितिशक्तेर्विपरीतेति । यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः । ततस्तद्धेतोर्निरोधसमाधेरवतारो युज्यत इत्याह—अतस्तस्यामिति । ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः । अथ निरुद्धाशेषवृत्ति चित्तं कीदृशमित्यत आह—तदवस्थमित्यादि । स निरोधोऽवस्था यस्य तत्तथोक्तम्[2] । निरोधस्य स्वरूपमाह—स निर्बीज इति । क्लेशसहितः कर्माशयो जात्यायुर्भोगबीजम्, तस्मान्निर्गत इति निर्बीजः । अस्यैव योगिजनप्रसिद्धामन्वर्थसंज्ञामादर्शयति—न तत्रेति । उपसंहरति—द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

## योगवार्त्तिकम्

तदेवं चित्तभूमिषु लक्ष्यालक्ष्यविवेकपूर्वकं प्रसिद्धस्य योगलक्षणस्यातिव्याप्तिं प्रदर्श्य योगलक्षणाकाङ्क्षोपपादिता । अतः परं लक्षणपरतयोत्तरसूत्रमवतारयति-तस्य लक्षणाभिधित्सयेति । तस्य द्विविधस्य योगस्य । उक्तातिव्याप्तिनिराकरणान्यथाऽनुपपत्त्या सूत्रद्वयेनैव लक्षणसमाप्तिर्भविष्यतीति सूचयितुमभिधित्सयेत्युक्तमन्यथा हि तस्य लक्षणसूत्रं प्रववृत इत्येतावन्मात्रमुच्येत ।

योगश्चित्तवृत्तिनिरोधः । चित्तमन्तःकरणसामान्यमेकस्यैवान्तः करणस्य वृत्तिभेदमात्रेण चतुर्धाऽत्र दर्शने विभागात्, तस्य यावल्लक्ष्यमाणा वृत्तयस्तासां निरोधस्तासां लयाख्योऽधिकरणस्यैवावस्थाविशेषः, अभावस्यास्मन्मतेऽधिकरणावस्थाविशेषरूपत्वात्, स योग इत्यर्थः । नन्विदं लक्षणं संप्रज्ञातस्याव्यापकं तत्र ध्येयाकारवृत्तिसत्त्वादित्याशङ्क्य भाष्यकार आह-सर्वशब्देति । सर्ववृत्तिनिरोध इत्यवचनादित्यर्थः ।

---

१. चतुर्थाध्याये इति शेषः ।

२. तथा च चित्तस्य संस्कारशेषावस्थैव निरोधशब्दार्थः, न तु वृत्त्यभावमात्रं स इति सूचितम् ।

नन्वेवं पूर्वोक्तातिव्याप्तिः,क्षिप्तादिष्वपि यत्किंचिद्वृत्तिनिरोधादिति चेद् ? न, तदा द्रष्टुः स्वरूपेऽवस्थानमिति वक्ष्यमाणसूत्रसाहित्येनैवास्य लक्षणत्वात् । तथा च द्रष्टृस्वरूपावस्थितिहेतुश्चित्तवृत्तिनिरोधः क्षिप्ताद्यवस्थासु नास्तीति नातिव्याप्तिः, संप्रज्ञातस्य च[1] स्वरूपावस्थिहेतुत्वमसंप्रज्ञातद्वाराऽस्त्येवेति ।

परे[2]तु क्षिणोति च क्लेशानिति पूर्वभाष्यानुसारेण क्लेशकर्मादिपरिपन्थित्वं निरोधविशेषणं पूरणीयम् । तथा च क्लेशकर्मादिपरिपन्थित्वे सति चित्तवृत्तिनिरोधत्व योगद्वयसाधारणं लक्षणमित्याहुः ।

अस्य च लक्षणस्य क्षिप्तादिभूमित्रयेऽतिव्याप्तिर्नास्तीत्यत्र हेतुं क्रमेण प्रतिपादयति–चित्तं हीत्यादिना । प्रख्या=तत्त्वज्ञानम्, अनेन सर्वे सात्त्विका गुणा उपलक्षिताः । प्रवृत्तिः=कर्म, अनेन सर्वे राजसा गुणा ग्राह्याः । स्थितिः= वृत्त्याख्यगतिशून्यता, निद्रेति यावद्, अनेन सर्वे तामसा गुणा ग्राह्याः । एते क्रमात् सत्वरजस्तम आख्यानां द्रव्याणां धर्माः पराश्रितत्वाद् रूपादिवद् गुणा इत्युच्यन्ते, तदाश्रयाणि तु सत्वादिद्रव्याणि रज्ज्वारम्भकतन्तुवदेव गुणा इत्युच्यन्ते । तथा च प्रख्यादिस्वभावकत्वात् चित्तं त्रिगुणं सत्त्वादिगुणत्रयनिर्मितं रज्जुवदित्यर्थः । ततः किमित्यत आह-प्रख्यारूपं हीति । हिशब्दो वाक्यालङ्कारेऽवधारणे वा । चित्तसत्त्वमिति चित्तस्य सत्त्वप्रधान्यप्रतिपादनाय पुनरुक्तम् । प्रख्यारूपमिति च तेजःसत्त्वव्यावर्त्तनायोक्तम् । तथा च प्रख्यास्वभावं चित्तरूपं सत्त्वं स्वोपसर्जनभूताभ्यां रजस्तमोभ्यां संसर्गेण क्षिप्तावस्थायामणिमाद्यैश्वर्ये शब्दादिविषये चानुरक्तं भवतीत्यर्थः । अतः क्षिप्तावस्थस्य वृत्तिनिरोधस्य स्वरूपावस्थानाहेतुत्वाद् रागादिक्लेशापरिपन्थित्वाद्वा न तत्रातिव्याप्तिरिति भावः । क्षिप्तावस्थायामतिव्याप्तिं परिहृत्य मूढावस्थायामपि तां परिहरति–तदेव तमसेति । उपगमुन्मुखं तत्प्रियमित्यर्थः । भावस्तु पूर्ववत् । विक्षिप्तावस्थायामतिव्याप्तिं परिहरति–तदेवप्रक्षीणेति । मोहस्तमोद्रव्यं कार्यकारणाभेदात्, तदेव दर्पणस्य मलवच्चित्तसत्त्वस्यावरणं प्रक्षीणं यत्र तत्प्रक्षीणमोहावरणम्, सर्वतः प्रद्योतमान

---

१—क्षिप्तादेः नियमतोऽसम्प्रज्ञातपूर्वकालिकत्वाभावेन अन्यथासिद्धतया नैतेषामसम्प्रज्ञातद्वारा तत्त्वमिति भावः ।

२—वस्तुतो जन्मान्तरे जायमानस्य सम्प्रज्ञातस्येव क्षिप्तादीनामपि नियतपूर्ववृत्तित्वनिर्वाहाल्लक्षणातिव्याप्तिस्तदवस्थैवेत्यतः सिद्धान्तलक्षणमाह–परे तु इति ।

सर्वविषयाकारवृत्तिमद्, एवंभूतं हिरण्यगर्भादीनां चित्तं रजोलेशेन संभेदाद्दीपितं सद् धर्मादिचतुष्टयप्रियं भवतीत्यर्थः। अत्रापि भावः पूर्ववदेव बोध्यः। अवस्थात्रयेऽतिव्याप्तिं परिहृत्यैकाग्रनिरुद्धावस्थयोर्लक्षणं क्रमेण योजयति—तदेव रजोलेशेनेत्यादिना। विक्षेपहेतुना रजोलेशेनापि मलेनापेतमत एव स्वरूपप्रतिष्ठं स्वाभाविकेन रूपेण प्रसादादिना सम्यगवस्थितं निर्मलदर्पणवद्, अतश्च सत्त्वपुरुषयोर्बुद्ध्यात्मनोर्विवेकख्यातिमात्रं तन्मात्रवृत्तिकं सद् धर्ममेघध्यानमात्रप्रियं भवति न तु क्लेशप्रियमैश्वर्यप्रियमित्यर्थः। धर्ममेघध्यानं किमित्याकाङ्क्षायामाह—तत्परमिति। तद्धर्ममेघाख्यं ध्यानं परमं प्रसंख्यानं तत्त्वज्ञानं विवेकख्यातेरेव परा काष्ठेति योगिनो वदन्तीत्यर्थः। तथा चेयमेकाग्रता सत्त्वपुरुषान्यताख्यातिरूपिणी द्रष्टृस्वरूपावस्थाने हेतुः, क्लेशकर्मादिपरिपन्थिनी चेति योगलक्षणाक्रान्तेति भावः। धर्ममेघसमाधिश्च सूत्रकारेणैव वक्ष्यते। यद्यप्यस्मिताऽनुगत एव संप्रज्ञातयोगे सत्त्वपुरुषान्यताख्यातिरस्ति न वितर्कानुगतादौ तथाऽप्यनेनैव तेऽप्युपलक्षणीयाः, एतदङ्गभूतत्वात्तेषामिति। निरुद्धावस्थायामपि लक्षणं योजयन्नेव सकारणस्य निरोधस्य स्वरूपमाह—चितिशक्तिरित्यादिना। संप्रज्ञातकाले संसारहेतुत्वादिदोषदर्शनादेवेतरवृत्तिनिरोधो जातस्तस्माच्च सिद्धायां विवेकख्यातिनिष्ठायां विवेकख्यातेरप्यनात्मत्वसाक्षात्करणात् तत्फलसिद्धेश्च तत्रापि वैराग्यं भवति, ततः सर्ववृत्तिनिरोध इति प्रक्रिया। तत्र यादृशी विवेकख्यातिनिष्ठा विवेकख्यातिवैराग्ये हेतुस्तामादौ दर्शयति—ख्यातिरितीत्यन्तेन। चितिशक्तिः पुरुषाख्या न परिणामिनी पूर्वधर्मापाये धर्मान्तरोत्पत्तिः परिणामस्तद्रहिता, कूटस्थनित्या, परमार्थसत्येति यावत्। लोकेऽर्थप्रकाशनरूपे फल एव चैतन्यशब्दः प्रयुज्यते, चैतन्यफलोपधानं च न सर्वदा सर्वपुरुषेऽस्तीत्याशयेन शक्तिपदोपादानम्। तथा च शक्तिरूपेणावस्थिता चितिरित्यर्थः। चितिश्च न गुणः, किं तु प्रकाशस्वरूपं द्रव्यमिति द्रष्टा दृशिमात्र इति सूत्रे विस्तरतः प्रतिपादयिष्यामः। यतोऽपरिणामिनी; अत एव चितिशक्तिरप्रतिसंक्रमाऽसंचारा। यथा बुद्धिर्विषयं गच्छति तद्ग्रहणार्थं नैवं चितिरक्रियत्वात्। अथ वा नास्ति प्रतिसंक्रमः सङ्गो विषयेषु यस्या इत्यप्रतिसंक्रमा, निर्लेपेति यावद्।

नन्वपरिणामित्वे चात्मनो विषयाकारत्वाभावात् कथं विषयस्फुरणम्? तत्राह—दर्शितविषया। दर्शितो बुद्ध्या निवेदितो विषयो यस्या इति विग्रहः। विषयैः सह बुद्धिवृत्तिश्चितौ प्रतिबिम्बिता सती भासत इति भावः।

वृत्तिसारूप्यमितरत्र इतिसूत्रे चैतद्व्यक्तं भविष्यति। यतोऽपरिणामिनी; अत एव शुद्धाऽनन्ता च सुखदुःखमोहाद्यात्मकाशुद्धिरहिता पूर्णा च, उक्ताशुद्धेः परिणामरूपत्वात् सक्रियस्यैव परिच्छिन्नत्वाच्चेति। इयं=विवेक-ख्यातिः, धर्म-धर्म्यभेदात्तद्वती वृत्तिः, सत्त्वगुणात्मिका सत्त्वगुणस्य कार्या, अतश्चितिशक्तितो विपरीता परिणामिनी स्वयमेव विवेकाकारिणी प्रतिसंक्रमवती दीप-शिखावत् विषयेषु सर्पणात्तथा जड़ा तथा सुखदुःखाद्यशुद्धिमती परिच्छिन्ना चेत्यतो-ऽनात्मत्वादिदोषदर्शनात् तत्फलसिद्धेश्च विवेकख्यात्यां विरक्तं प्रत्युत्पन्नालं-प्रत्ययं चित्तं तामपि ख्यातिं निरुणद्धि=आवृणोति विलापयतीति यावत्। परवैराग्येण हेतुना चित्तस्य सा वृत्तिः स्वयमेव विलीयते, यथा निद्रादोषेण सुषुप्तौ जाग्रदादिवृत्तिरिति शर्करास्वादेनेव गुडदोषा अभिव्यज्यन्त इत्यतो विवेकख्यातेर्दोषदर्शने पुरुषगुणदर्शनमुपयुज्यत इति भावः। तथा यावद् वृत्तिदोषालिप्तत्वेन वृत्तिवैधर्म्येण वृत्तिभेदत आत्मा न दृश्यते [1] तावद्दोषदर्श-नेऽप्यात्मत्वभ्रमाद् वृत्तिवैराग्यं न घटते; आत्मत्वेनैव परमप्रियत्वाद्। अत आत्मवृत्त्योरुभयोरेव गुणदोषाभ्यां विविच्य दर्शनं वृत्तिवैराग्ये हेतुरित्याशयः। तदवस्थं निरोधावस्थं चित्तं संस्कारोपगं सकारमात्रानुसारि संस्कारमात्ररूपेण प्रशान्तवाहि भवति। सेयं प्रशान्तवाहिता स पूर्वोक्तो निर्बीजः समाधिः निरोधयोग;, न किञ्चित्तत्र योगे ज्ञायत इति विग्रहेणासंप्रज्ञातनामा चेति वा-क्यार्थः। असंप्रज्ञातयोगे चित्तबीजस्य संस्कारस्य तत्त्वज्ञानपर्यन्तस्याशेषतो दाहान्निर्बीजसंज्ञा तस्येति भावः। बीजदाहादेव चास्य निरोधस्य स्वरूपावस्थि-तिहेतुतया क्लेशकर्मादिपरिपन्थितया च लक्षणसङ्गतिरित्याशयः। सुषुप्तौ च निद्राऽऽख्यचित्तवृत्तिसत्त्वान्न संप्रज्ञातलक्षणातिव्याप्तिस्तत्कालीननिरोधस्य क्लेशादिपरिपन्थित्वाभावाच्च।

एतेन यदाधुनिकवेदान्तिब्रुवा असंप्रज्ञातेऽपि निर्विकल्पमात्मज्ञानं स्वरूपसद्बुद्धिवृत्तिरूपं तिष्ठतीति वदन्ति; तदप्रामाणिकत्वेनैतद्भाष्यविरोधेन चोपेक्षणीयम्,

युञ्जीत योगी निर्जित्य त्रीन् गुणान् परमात्मनि।
तन्मयश्चात्मना भूत्वा चिद्वृत्तिमपि संत्यजेद्

इति मार्कण्डेयपुराणादावैश्वरयोगेऽपि वृत्तिशून्यत्वावगमाच्च। निर्विकल्पं

---

१. यथा अत्यन्ततुन्दिले क्लेशावहे शरीरे दोषदर्शनानन्तरमपियावत्स्वत्त्वभ्रमस्ता-वत् ततो वैराग्यं न भवति तद्वदिति तात्पर्यम्।

त्वात्मज्ञानं संप्रज्ञातकाल एव भवति, शब्दार्थज्ञानविकल्पशून्यस्य संप्रज्ञातकालीनज्ञानस्यैव निर्विकल्पकस्य लयस्य मानत्वाद् । योगद्वयमुपसंहरति—द्विविध इति ॥ २ ॥

तदवस्थे चेतसि विषयाभावाद् बुद्धिबोधात्मा[1] पुरुषः किंस्वभाव इति ?

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥**

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये[2] ।
व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा[3] ॥ ३ ॥

तत्त्ववैशारदी

संप्रत्युत्तरसूत्रमवतारयितुं चोदयति—तदवस्थे चेतसीति । किमाक्षेपे । तत्तदाकारपरिणतबुद्धिबोधात्मा खल्वयं पुरुषः सदानुभूयते, न तु बुद्धिबोधरहितः । अतोऽस्य पुरुषस्य बुद्धिबोधः स्वभावः सवितुरिव प्रकाशः । न च संस्कारशेषे चेतसि सोऽस्ति । न च स्वभावमपहाय भावो वर्तितुमर्हतीति भावः । स्यादेतत् ? संस्कारशेषामपि बुद्धिं कस्मात्पुरुषो न बुध्यत इत्यत आह—विषयाभावादिति । न बुद्धिमात्रं पुरुषस्य विषयः अपि तु पुरुषार्थवती बुद्धिः । विवेकख्यातिविषयभोगौ च पुरुषार्थौ । तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभाव इत्यर्थः ।

सूत्रेण परिहरति—तदा द्रष्टुः स्वरूपेऽवस्थानम् । स्वरूपइत्यारोपितं शान्तघोरमूढस्वरूपं निवर्तयति । पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकं न तु बुद्धिबोधः शान्तादिरूपः । औपाधिको हि सः, स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसंनिधानोपाधिररुणिमा । न चोपाधिनिवृत्तावुपहितनिवृत्तिः, अतिप्रसङ्गादिति भावः । स्वरूपस्य[4] चाभेदेऽपि भेदं विकल्प्याधिकरणभाव उक्त इति ।

अयमेवार्थो भाष्यकृता द्योत्यते—स्वरूपप्रतिष्ठेति । तदानीम्—निरोधावस्थायां न व्युत्थानावस्थायामिति भावः । स्यादेतद् ?व्युत्थानाव-

---

१, बुद्धिवृत्तिविशिष्टतया प्रतीयमान इति ध्येयम् ।

२. निरोधकैवल्ययोः प्रयोजकप्रयोज्यभावात् न दृष्टान्तासङ्गतिः ।

३. प्रतीयते इति शेषः ।

४. द्रष्टृतत्स्वरूपपदाभिलप्यतत्त्वस्यैकत्वमिति न स्वरूपस्य पुरुषादस्थानाधारता पारमार्थिकी, आधाराधेयभावस्य भेदगर्भत्वात्, तथाप्यौपचारिकी सा इति भावः ।

स्थायामप्रतिष्ठिता स्वरूपे चितिशक्तिर्निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी सा स्यात् । व्युत्थाने[1] वा स्वरूपप्रतिष्ठाने व्युत्थाननिरोधयोरविशेष इत्यत आह —व्युत्थानचित्ते त्विति । न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच्च्यवते । तेनयथा निरोधे तथैव व्युत्थानेऽपि । न खलु शुक्तिकायाः प्रमाणविपर्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः । प्रतिपत्ता तु तथाभूतमप्यतथात्वेनाभिमन्यते । निरोधसमाधिमपेक्ष्य संप्रज्ञातोऽपि व्युत्थानमेवेति ॥ ३ ॥

## योगवार्त्तिकम्

ननु चित्तवृत्तिनिरोधे कः पुरुषार्थ इत्याकाङ्क्षया योगलक्षणपूरणाय च प्रवर्तमानं योगस्य फलप्रतिपादकं सूत्रमाधकप्रश्नमुखेनोत्थापयति प्रसङ्गादात्मनः कौटस्थ्यमति प्रतिपादयितुम्—तदवस्थ इति ।

नन्वसंप्रज्ञातावस्थे चेतसि सति बुद्धिबोधात्मा बुद्धिविषयकबोधस्वरूपो बुद्धिसाक्षी पुरुषः किंस्वभावः केन रूपेण तिष्ठति? किं व्युत्थान इव तदानीमपि प्रकाशरूप एव तिष्ठति, वृत्त्याख्यदृश्याभावादेव तु न पश्यति ? अथ वा काष्ठवदप्रकाशरूप एव आत्मा तदा तिष्ठति, व्युत्थानकाले तु निमित्तविशेषात् प्रकाशरूपेण परिणमते? किं वा दशाद्वये दीपवन्नश्यतीत्यर्थः । एतेष्वाद्यपक्षं सूत्रेण सिद्धान्तयति—

तदा द्रष्टुः स्वरूपेऽवस्थानम् ।

तदाऽसंप्रज्ञातयोगकाले द्रष्टुः चितिशक्तेः पुरुषस्य स्वरूपे निर्विषयचैतन्यमात्रेऽवस्थानमित्यर्थः । यथा जपापाये स्फटिकस्यालोहिते स्वस्वरूपेऽवस्थानं तथा वृत्त्यपाये पुरुषस्य वृत्तिप्रतिबिम्बशून्ये स्वस्वरूपेऽवस्थानमिति भावः । यथा च तदा संस्कारशेषबुद्धेर्भानं न भवति तथोत्तरसूत्रे वक्ष्यामः । तथा च कूटस्थ एव पुरुषो व्युत्थान इव तदानीमपि प्रकाशस्वरूप एव तिष्ठति; योगलक्षणमप्येतद्धेतुनिरोधत्वमेव, तत्र च वृत्त्यात्मकदुःखाभावः पुरुषार्थ इति भावः । सोऽयं पुरुषार्थो भाष्यकारेण सूचितः यथा कैवल्य इत्यनेन । कैवल्ये हि दुःखनिवृत्तिरेव पुरुषार्थ इति वक्ष्यति-हेयं दुःखमनागतम् इति

---

१. व्युत्थानम् अनिरुद्धचित्तता । अत एव असम्प्रज्ञातापेक्षया सम्प्रज्ञातोऽपि व्युत्थानमेवेति सिद्धान्तः । तत्र क्षिप्तमूढयोः नियमेन, विक्षिप्तसम्प्रज्ञातयोस्तु आपेक्षिकं तथात्वमिति विशेषः ।

सूत्रेणेति । क्रमेण चरमासंप्रज्ञातेऽशेषसंस्कारक्षयात् चित्तेन सह वृत्तीनामात्यन्तिकनिरोधे सत्यात्यन्तिकं स्वरूपावस्थानं मोक्षाख्यमिति ।

ननु तदानीं दुःखाभावेऽन्यदा दुःखमस्तीत्यायातम, तथा चापरिणामित्वानुपपत्तिरित्याशङ्कां परिहरति भाष्यकारः—व्युत्थानेति । व्युत्थानचित्तदशायां तु चितिस्तथाऽपि स्वरूपेण तिष्ठन्ती, न तथा नासंप्रज्ञातस्य कैवल्यस्य च समानरूपेत्यर्थः ।। ३ ।।

**कथं तर्हि ? दर्शितविषयत्वात्—**

**वृत्तिसारूप्यमितरत्र ।। ४ ।।**

**व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुषः । तथा च सूत्रम्—एकमेव दर्शनं ख्यातिरेव दर्शनम् इति । चित्तमयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः, तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिः संबन्धो हेतुः[१] ।। ४ ।।**

सूत्रान्तरमवतारयितुं पृच्छति—कथं तर्हीति । यदि तथा भवन्ती न तथा, केन तर्हि प्रकारेण प्रकाशत इत्यर्थः ।

हेतुपदमध्याहृत्य सूत्रं पठति—दर्शितविषयत्वाद्वृत्तिसारूप्यमितरत्र । इतरत्र व्युत्थाने याश्चित्तवृत्तयः शान्तघोरमूढास्ता एवाविशिष्टा अभिन्ना वृत्तयो यस्य पुरुषस्य, स तथोक्तः । सारूप्यमित्यत्र सशब्द एकपर्यायः । एतदुक्तं भवति—जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः संनिधानादभेदग्रहे बुद्धिवृत्तीः समारोप्य शान्तोऽस्मि, दुःखितोऽस्मि, मूढोऽस्मीत्यध्यवस्यति, यथा मलिने दर्पणतले प्रतिबिम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोऽस्मीति । यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवद्बुद्धिवृत्तिर्यद्यपि च प्राकृतत्वेना-

---

१. तथा च बुद्धिबोधात्मेति न स्वरूपतः । अतश्च निरोधावस्थायाम् अन्यथा स्वभावः पुरुषस्य व्युत्थानावस्थायाञ्च अन्यथैवेति कथं तस्य कूटस्थत्वमिति शङ्का समाहितेति भावः । अत एव परस्य परचित्तेन कथं न वृत्तिसारूप्यम् नियामकाभावादिति पूर्वपक्षोप्युपक्षिप्तः, तत्तच्चित्तस्य तत्तत्पुरुषेणैवानादिसंयोगाभ्युपगमात् । संयोगश्च नात्र पारिभाषिकः "अप्राप्तयोः प्राप्तिस्संयोगः" इत्येवंलक्षितः, तस्य अनादित्वाभावात्, अप्राप्तिपूर्वकत्वेन तस्य सादित्वस्य स्फुटत्वात् । अतः संयोगोऽत्र सन्निधानमेवेति सूचितम्भवतीति 'अयस्कान्तमणिकल्पमित्यादि' भाष्याशयोऽपि वर्णितप्राय एव ।

चिद्रूपतयानुभाव्यस्तथापि बुद्धेः पुरुषत्वमापादयन्पुरुषवृत्तिरिवानुभव इवावभासते। तथा चायमविपर्ययोऽप्यात्मा विपर्ययवानिव भोक्तापि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इव विवेकख्यात्या प्रकाशते। एतच्च चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् इत्यत्र सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः इत्यत्र चोपपादयिष्यते। एतच्च मतान्तरेपि सिद्धमित्याह—तथा चेति। पञ्चशिखाचार्यस्य सूत्रम्[१] एकमेव दर्शनं ख्यातिरेव दर्शनम् इति। ननु कथमेकं दर्शनम् यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वेनानुभाव्या, दर्शनं ततोऽन्यत्पुरुषस्य चैतन्यमनुभवो दर्शनमित्यत आह-ख्यातिरेव दर्शनमिति। उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीमभिप्रेत्यैतदुक्तम्—एकमेवेति। चैतन्यं तु पुरुषस्य स्वभावो न ख्यातेः। तत्तु न लोकप्रत्यक्षगोचरः,अपि त्वागमानुमानगोचर इत्यर्थः। तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति। तमुपपादयन्नाह—चित्तं स्वं भवति पुरुषस्य स्वामिन इति संबन्धः। ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता। न चास्य तज्जनितोपकारसंबन्धसंभवः, तदनुपकार्यत्वात्; तत्संयोगतदुपकारभागित्वे परिणामप्रसङ्गादित्यत आह—अयस्कान्तमणिकल्पं संनिधिमात्रोपकारि दृश्यत्वेनेति। न पुरुषसंयुक्तं चित्तम्, अपि तु तत्संनिहितम्। संनिधिश्च पुरुषस्य न देशतः कालतो वा, तदसंयोगात्;किन्तु योग्यतालक्षणः। अस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः। तदुक्तम्—दृश्यत्वेनेति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः। भोगश्च यद्यपि शब्दाद्याकारा वृत्तिश्चित्तस्य धर्मस्तथापि चित्तचैतन्ययोरभेदसमारोपाद्वृत्तिसारूप्यात्पुरुषस्येत्युक्तम्। तस्माच्चित्तेनासंयोगेऽपि तज्जनियतोपकारभागिता च पुरुषस्याऽपरिणामिता चेति सिद्धम्। ननु स्वस्वामिसम्बन्धो भोगहेतुरविद्यानिमित्तः, अविद्या तु किंनिमित्ता, न खल्वनिमित्तं कार्यमुत्पद्यते। यथाहुः—

स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता

इति शङ्कामुपसंहारव्याजेनोद्धरति—तस्माच्चित्तवृत्तिबोधे। शान्तघोरमूढाकारचित्तवृत्त्युपभोगे अनाद्यविद्यानिमित्तत्वादनादिः संयोगो हेतुः, अविद्यावासनयोश्च सन्तानो बीजाङ्कुरसन्तानवदनादिरिति भावः ॥ ४ ॥

---

१. पूर्वाचार्यसूत्रमिति विवरणे।

योगवार्त्तिकम्

सूत्रान्तरमवतारयितुं पृच्छति—कथं तर्हीति। कूटस्थाऽपि चितिः केन प्रकारेण तर्हि व्युत्थाने तिष्ठतीत्यर्थः। असंप्रज्ञातापेक्षया संप्रज्ञातोऽप्यत्र व्युत्थानं बोध्यम्। अत्र प्रत्युत्तरं सूत्रं हेतुपदमध्याहृत्य पठति—दर्शितविषयत्वादिति।

वृत्तिसारूप्यमितरत्र। इतरत्र व्युत्थाने चित्तेन सह द्रष्टुर्वृत्तौ[१] सारूप्यमित्यर्थः। व्युत्थाने हि बिम्बप्रतिबिम्बरूपयोर्बुद्धिपुरुषवृत्त्योः सारूप्यम्, तदेतद्व्याचष्टे—व्युत्थानेति। इतरत्र व्युत्थाने याश्चित्तस्य वृत्तयो दीपस्य शिखा इव द्रव्यरूपा भङ्गुरा अवस्थापरिणामाः मूषानिषिक्तद्रुतताम्रवत् स्वसंयुक्तार्थाकारास्त्रिगुणकार्यत्वात् सुखदुःखमोहाश्रयतया शान्तघोरमूढाख्याः भवन्ति ताभिरविशिष्टा अविलक्षणा वृत्तयो यस्य पुरुषस्य स तथा। वृत्तिश्च गुणो न भवति, भागगुणाभ्यां तत्त्वान्तरं वृत्तिः संबन्धार्थं सर्पतीति सांख्यसूत्रात्। भागो विभक्तांशोऽग्निविस्फुलिंगवदिति। कुत पुनरपरिणामिनो वृत्तिस्तत्रोक्तम्-दर्शितविषयत्वादिति। बुद्ध्या निवेदितविषयत्वादित्यर्थः। निवेदनं च स्वारूढविषयस्य प्रतिबिम्बरूपेण चित्याधानम्,

गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः

इति विष्णुपुराणादिभ्यः।

एतदुक्तं भवति—यद्यपि पुरुषश्चिन्मात्रोऽविकारी तथाऽपि बुद्धेर्विषयाकारवृत्तीनां पुरुषे यानि प्रतिबिम्बानि तान्येव पुरुषस्य वृत्तयः, न च ताभिरवस्तुभूताभिः परिणामित्वम् स्फटिकस्येवातत्त्वतोऽन्यथाभावादिति। तदुक्तं साङ्ख्ये—जपास्फटिकयोरिव नोपरागः किं त्वभिमान इति। सूत्रकारोऽपि वक्ष्यति—चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् इति।

एतेन सुखदुःखमोहगुणक[२]वृत्तिसारूप्याद् व्युत्थाने चितिरपि दुःखादिमतीव यद्भवति तदेव चितेर्दुःखभोगो दुःखाभ्यवहरणरूपः, प्रतिबिम्बरूपदुःखहानमेव चासंप्रज्ञातस्य फलमिति सूत्रद्वयेन सिद्धम्।

---

१. पुरुषवृत्तिबुद्धिवृत्त्योः सारूप्यमित्यर्थः। पुरुषवृत्तिस्वरूपन्त्वनुपदमेव वक्ष्यते।
२. बुद्धिवृत्तीत्यर्थः।

ये त्वहं सुखी दुःखीत्यादिप्रत्ययादात्मन एव पारमार्थिकीं वृत्तिमिच्छन्ति त एवं प्रत्याख्येयाः—स्वत एव चेदात्मनः परिणामास्तर्हि सर्वावयवावच्छेदेन सर्वदा वृत्तिप्रसंगादनिर्मोक्षादिप्रसङ्गः। यदि मनःसंयोगो निमित्तम् तर्हि लाघवादेकेन मनस्त्वेनैव हेतुतास्ऽतु, आत्ममनस्तत्संयोगानां त्रयाणां हेतुत्वे गौरवाद्, अनुमानं चार्थाकारपरिणामसुखादिकमन्तःकरणोपादानकं बाधकाभावे सति तदन्वयव्यतिरेकानुविधायित्वाद् मनःसंयोगवदिति। भोगे[1] व्यभिचारवारणाय सत्यन्तम्। बुद्धेः स्वभोक्तृत्वे च बाधकं कर्तृकर्मविरोधं सूत्रकारो वक्ष्यति। अहं कर्ता, सुखीत्यादिप्रत्ययास्तु—अहं गौर इत्यादिभ्रमशतान्तःपातित्वेनाप्रामाण्यज्ञानास्कन्दिताः नोक्तानुमानस्य बाधकाः, प्रत्युत—

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।
य पश्यति तथाऽऽत्मानमकर्त्तारं स पश्यति

इत्यादि स्मृत्युपोद्बलितेनोक्तानुमानेनैव बाध्यन्ते देहभिन्नात्मसाधकैरनुमानैरहं गौर इत्यादिप्रत्ययवदिति दिक्।

स्वोक्ते बुद्धिपुरुषयोर्वृत्तिसारूप्ये पंचशिखाचार्यसूत्रं प्रमाणयति—तथा च सूत्रमिति। ख्यातिर्बुद्धिर्दर्शनं पुरुषस्य इत्यन्तम्[2] च सूत्रम्। तथा च ख्यातिरेव दर्शनम्इत्येकाकारमेव दर्शनं भ्रमो लोकानामिति सूत्रार्थः। इतिशब्दश्चान्यो भाष्ययोजनार्थं पूरणीयः।

ननु सविषयवृत्तेः स्फुरणं चेतनसंयोगादेव भवतु यथा सजलघटादिप्रकाशः सूर्यसम्बन्धात्, अतः किमर्थं चैतन्ये वृत्तिप्रतिबिम्बं वृत्तौ वा वक्ष्यमाणचैतन्यप्रतिबिम्बं कल्प्यते, सुख्यहं जानामीति बुद्धिपुरुषयोरेकताभ्रमस्तु परस्परप्रतिबिम्बं विनाऽपि दूरस्थवनस्पत्योरिव दोषवशादेव संभवति, तत्कथं बुद्धिपुरुषयोर्वृत्तिसारूप्यसिद्धिरिति ?

अत्रोच्यते—

चेतने तावद् बुद्धिप्रतिबिम्बमवश्यं स्वीकार्यम्, अन्यथा कूटस्थनित्यविभुचैतन्यस्य सर्वसंबन्धात्सदैव सर्वं वस्तु सर्वैर्ज्ञायेत, न हि सूर्यसंबन्धे सति घटाद्यप्रकाशो दृष्ट इति।

---

१. दुखादेरन्तःकरणधर्मत्वे सर्वदाऽव्यवधानेन भोगापत्तेरित्यतो हेतुविशेषणम् बाधकाभावे सतीति। सुखदुःखयोरभावात्मकत्वस्याप्रमाणिकतया न सर्वदा सुखाद्यन्यतरयोगसत्त्वम् अपि तु काचन तटस्थावस्थापि मन्तव्यैवेत्यर्थः।

२. इतिशब्दान्तमित्यर्थः।

न चाज्ञानाख्यं ज्ञानप्रतिबन्धकं चैतन्ये कल्पनीयम्, नित्यज्ञानस्य प्रतिबन्धासंभवात्,[1]

दुखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः

इत्यादिभिरात्मन्यज्ञानप्रतिषेधाच्च। अतोऽर्थभानस्य कादाचित्कत्वाद्युपपत्तयेऽर्थाकारतैवार्थग्रहणं वाच्यम्, बुद्धौ[2] तथा दृष्टत्वाद्। बुद्धावपि हि संयोगमात्रस्यार्थग्रहणत्वेऽतीन्द्रियस्याप्यर्थस्य बुद्धिग्राह्यत्वप्रसंगात्। सा चार्थाकारता बुद्धौ परिणामरूपा, स्वप्नादौ विषयाभावेन तत्प्रतिबिम्बासंभवात्। पुरुषे च प्रतिबिम्बरूपा, विद्यमानवृत्तिमात्रग्राहके पुंसि प्रतिबिम्बेनैवोपपत्तेरिति न केवलं तर्कादेव चिति बुद्धेः प्रतिबिम्बं कल्प्यते, किंतु—

तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥
यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः।
रञ्जकाद्युपधानेन तद्वत्परमपूरुषः॥

इत्यादिस्मृतिशतैरपीति।

न चैवं संस्कारशेषा बुद्धिः पुरुषे प्रतिबिम्बिता भायादित्यसंप्रज्ञातयोगानुपपत्तिरिति वाच्यम्, परमाणोरिव वृत्त्यतिरिक्तानां प्रतिबिम्बसमर्पणासामर्थ्यस्य फलबलेन कल्पनाद्। अनादिस्वस्वामिभावस्यैव प्रतिबिम्बनियामकतया वक्ष्यमाणत्वात्तु न परबुद्धिवृत्तेर्भानम्। अत एव पुरुषार्थवत्येव बुद्धिः पुरुषस्य विषय इति सांख्यसिद्धान्तो विवेकख्यातिविषयभोगौ च पुरुषार्थाविति। यथा च चिति बुद्धेः प्रतिबिम्बमेवं बुद्धावपि चित्प्रतिबिम्बं स्वीकार्यमन्यथा चैतन्यस्य भानानुपपत्तेः; स्वयं साक्षात्स्वदर्शने कर्मकर्तृविरोधेन बुद्ध्यारूढतयैवात्मनो[3] घटादिवज्ज्ञेयत्वाभ्युपगमात्।

तथा च वक्ष्यति सूत्रकारः—द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थमिति।

---

१. ज्ञानाज्ञानयोः तमःप्रकाशवद्विरुद्धस्वभावयोरैकाधिकरण्यासम्भवादित्यर्थः। अत्रैवार्थे शब्दप्रमाणमाह—दुःखाज्ञानमया धर्माः इति।

२. परधर्मेणापि अज्ञानेन उपहितस्यैकदेशावच्छेदेनावरणाऽनावरणाभ्यामुपपत्तेर्बुद्धिप्रतिबिम्बोऽनावश्यक इत्यतो दृष्टान्तद्वारा स्वपक्षविनिगमकमाह—बुद्धौ तथेत्यादि।

३. आत्मानमात्मना वेत्तीत्यादाविति शेषः।

बुद्धावात्मप्रतिबिम्बमेव च तान्त्रिका बुद्धेश्चिच्छायाऽऽपत्तिरित्यात्माकारतेति प्राहुः ।

प्रतिबिम्बोपाधौ बिम्बाकारो बुद्धेः[1]परिणाम एव, स च साक्षिभास्य इति ।

एतेन नीरूपत्वाद् बुद्धिपुरुषयोरन्योन्यं प्रतिबिम्बनं न सम्भवतीत्यपास्तम् । उभयत्रोभयाकारबुद्धिपरिणामस्यैव प्रतिबिम्बशब्देनात्र विवक्षितत्वाद्, जलादावपि सूर्याद्याकारबुद्धिपरिणामस्यैव सूर्यादिप्रतिबिम्बितत्वाच्च । तदेव बुद्ध्यात्मनोः परस्परप्रतिबिम्बरूपाद्दोषादेवैकताभ्रमोऽहं कर्त्ता सुखी जानामीत्यादिरूप इति । तदेतत्परस्परं प्रतिबिम्बं साङ्ख्यकारिकायामिवशब्दाभ्यामुक्तम्—

तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः

इति दिक् ।

यच्चैतच्चैतन्ये बुद्धिवृत्तिसारूप्यमुक्तं चैतन्यस्य बुद्ध्याकारतारूपम् इदमेव चैतन्यस्यार्थोपरक्तवृत्तिभानम्, तस्य चाकारोऽयं घट इत्यादिरूप एव, अन्यथा वृत्तिसारूप्यानुपपत्तेः । न तु वृत्तिबोधस्य पृथगाकारोऽस्ति । घटमहं जानामि दुःखितोऽहमित्यादिकं तु बुद्धेरेवाकारान्तरम्, पुरुषस्यापरिणामित्वाद् अभ्रान्तत्वाच्चेति । तथा च सूत्रकारो वक्ष्यति—**चित्तेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनमिति ।**

ननु वृत्तितद्बोधौ यदि घटदीपाविवात्यन्तभिन्नौ न तु चिज्जडात्मकमविभक्तमेकं वस्तु मणिकान्तिवत् तर्हि तत्तच्चित्तवृत्तीनां प्रतिनियततत्तत्पुरुषमात्रबोध्यत्वे किं नियामकमित्याकाङ्क्षायां प्रतिनियतयोरेव चित्तात्मनोरनादिः स्वस्वामिभावसंबन्धस्तन्नियामक इति प्रतिपादयति—**चित्तमयस्कान्तेत्यादिना सम्बन्धो हेतुरित्यन्तेन ।** तत्राप्यादावनादिं स्वस्वामिभावं युक्त्योपपादयति—**चित्तमिति ।** यथाऽयस्कान्तमणिः स्वस्मिन्नेवायः-संनिधीकरण[2]मात्रात् शल्यनिष्कर्षणाख्यमुपकारं कुर्वन् स्वामिनः स्वं भवति

१. तथा च जलादौ यः सूर्यादिप्रतिबिम्बः तस्य बिम्बतया न सूर्यादिः किन्तु तदाकारा बुद्धिवृत्तिरेवेति वृत्तेरेव सर्वत्र बिम्बतया न कुत्रापि सरूपस्य प्रतिबिम्ब इति न दोषः इति भावः । बिम्बस्थानीयवृत्तिमानार्थं वृत्त्यन्तरस्वीकारेऽनवस्थाभिया तस्याः साक्षिभास्यत्वं चोक्तम् ।

२. सन्निधीकरणमाकर्षणम् ।

भोगसाधनत्वात्; तथैव चित्तमप्ययःसदृशविषयजातस्य स्वस्मिन् संनिधीकरणमात्राद् दृश्यत्वरूपमुपकारं कुर्वत् पुरुषस्य स्वामिनः स्वं भवति भोगसाधनत्वाद् । अतश्चित्तपुरुषयोरनादिः स्वस्वामिभावः सम्बन्ध इति शेषः ।

ततः किमित्यत आह–तस्मादिति । तस्मात् स्वस्वामिभावस्य सिद्धत्वात् स एवानादिसम्बन्धः पुरुषस्य चित्तवृत्तिदर्शने हेतुरित्यर्थः । अतो न परचित्तेन परस्य वृत्तिसारूप्यं भवति, कदाऽपि तद्वृत्त्यवबोधेन तयोः स्वस्वामिसम्बन्धाभावाद् ।

ननु स्वस्वामिभावस्य कथमनादित्वम्, स हि भोग्यभोक्तृभावरूपतया प्रलये न तिष्ठतीति ? मैवम् –अभुज्यमानधनेऽपि सुषुप्तस्य स्वस्वामिभावेन स्वत्वस्वामित्वयोरतिरिरिक्तपदार्थत्वात् । स्वरूपसंबंधविशेषत्वाद्वा[1] प्रतियोग्यनुयोगिभाववत् ।

अथवा स्वभुक्तवृत्तिवासनावत्त्वमेव बुद्धौ पुरुषस्य स्वत्वम्, ईदृशो भोग्यभोक्तृभाव एव च तान्त्रिकैर्भोग्यभोक्तृयोग्यतेत्युच्यते, **चिदवसानो भोग** इति सांख्यसूत्रोक्तस्य सुखदुःखानुभवरूपभोगस्य पुरुषधर्मत्वादिति । स च स्वस्वामिभावश्चित्तपुरुषयोरनादिरेव स्वीक्रियते ।

न च महत्तत्त्वरूपस्य चित्तस्य कार्यतया कथं तद्धर्मस्यानादित्वमिति वाच्यम् । अन्तःकरणस्य वृक्षवत् कार्यावस्थायामेव महत्तत्त्वपरिभाषास्वीकाराद् बीजावस्था तु प्रकृत्यंशत्वरूपा नित्यैव । अन्यथा धर्माधर्मसंस्कारादीनामाश्रयं विना प्रलयेऽवस्थानानुपपत्तेः । प्रकृतिमात्रस्य तदाश्रयत्वे तत्कार्यभोगस्मृत्यादेरपि तन्निष्ठत्वस्यैवौचित्याद् अन्तःकरणकल्पनाऽनर्थक्यम्, अन्तःकरणधर्मत्वं धर्मादीनामिति सांख्यसूत्रस्य यथाश्रुतार्थानुपपत्तिश्चेति ।

अथैवं बुद्धितत्कारण[2]योरुभयोर्धर्मादिकल्पने गौरवमिति चेद् ? दृष्टानुसारितयाऽस्य गौरवस्य प्रामाणिकत्वाद् । यथा हि परमाणुपर्यन्तमेव घटे पाकेन रूपं[3] जायते तद्घटभङ्गे च तैरणुभिर्घटान्तरं तद्रूपकं भवति तथैव प्रकृतिपर्यन्तमेव बुद्धौ धर्मादिकमुत्पद्यते, तद्बुद्धिनाशे च तत्प्रकृतिभिः तादृशधर्मादिमदेव बुद्ध्यन्तरमुत्पद्यते कारणगुणप्रक्रमादिति दिक् ॥४॥

---

१, स्वरूपाभिन्नः संबंधः स्वरूपसंबंध इति स्पष्टार्थः । यः सम्बन्धः सम्बन्धिभ्यान्न अतिरिच्यते स इति भावः । सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजनकमिति सारम् । तथा च स्वस्वाभिभावः संबंधः स्वस्मात् स्वामिनश्च नातिरिच्यते । तथा च प्रलयेपि तत्सत्त्वं निर्बाधम् ।

२. कारणं प्रकृतिः ।

३. अत्रार्थे "स्वगुणाः परमाणूनां विशेषाः पाकजादयः" इति न्यायकुसुमाञ्जलिकारिका (१।१।१ ) द्रष्टव्या ।

मपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते। तस्यात्मभावभावना स्वाभाविकी प्रवर्तते, यस्याभावादिदमुक्तम्–स्वभावं मुक्त्वा दोषाद्येषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्रात्मभावभावना—कोऽहमासं, कथमहमासं, किंस्विदिदं, कथंस्विदिद, के भविष्यामः, कथं वा भविष्याम इति। सा तु विशेषदर्शिनो निवर्तते। कुतः? चित्तस्यैवैष विचित्रः परिणामः, पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति। ततोऽस्यात्मभावभावना कुशलस्य निवर्तत इति॥ २५॥

### तत्त्ववैशारदी

तदेवं कैवल्यमूलबीजं युक्तिमयमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृतपुरुषान्तराद्व्यावृत्तमाह—विशेषदर्शिन आत्मभावभावनानिवृत्तिः। यस्मात्मभावे भावनास्ति तस्याष्टाङ्गयोगोपदेशाननुतिष्ठतो युञ्जानस्य तत्परिपाकाच्चित्तसत्त्वपुरुषयोर्विशेषदर्शनादात्मभावभावना निवर्तते। यस्यात्मभाव-भावनैव नास्तिकस्य, तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नात्मभावभावनानिवृत्तिरिति सूत्रार्थः।

नन्वात्मभावभावनायाश्चित्तवर्तिन्याः कुतोऽवगम इत्यत आह - **यथा प्रावृषीति**। प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानुष्ठानं वा तदभिनिर्वर्तितमस्तीत्यनुमीयते। तस्य चात्मभावभावनावश्यमेव स्वाभाविकी वस्त्वभ्यासं विनापि प्रवर्तते। अनधिकारिणमागमिनां वचनेन दर्शयति—**यस्याभावादिदमिति**। पूर्वपक्षः—नास्ति कर्मफलं परलोकिनोऽभावात्परलोकाभाव इति। तत्र रुचिः। अरुचिश्च निर्णये पञ्चविंशतितत्त्वविषये। आत्मभावभावना प्राग्व्याख्याता। विशेषदर्शिनः परामर्शमाह—**चित्तस्यैवेति**। अस्य विशेषदर्शनकुशलस्यात्मभावभावना विनिवर्तत इति॥ २५॥

### योगवार्त्तिकम्

तदेवं बुद्धिपुरुषविषयाणां विवेकं प्रदर्श्यैतज्ज्ञानादाद्यं मोक्षमादौ प्रतिपादयति—

**विशेषदर्शिन आत्मभावभावनानिवृत्तिः**। मातृमानमेयात्मकस्याखिलप्रपञ्चस्य तप्तायःपिण्डवदेकीभावापन्नस्य यथोक्तप्रकारैरन्योन्यं विशेषदर्शिनो विवेकसाक्षात्कारिणश्चित्तस्यात्मभावे भावना स्वसत्ताजिज्ञासा कोऽहमासमित्यादिरूपा भाष्ये व्याख्येया, तस्या भयशोकप्रवृत्तिनिवृत्त्याद्यनर्थहेतोर्निवृत्तिराद्यो मोक्षो भवतीत्यर्थः। स्वर्गनरकमोक्षादिभिर्हि विचित्ररूपता चित्तस्यैव भवति न तु सदेकरूपचिन्मात्रस्य, न ममेत्यवधारणे सति

नैवात्मभावचिन्तोदेतीति भावः। तथा च श्रुतिः—एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापकरव मितीत्यादिः। तदेतदुक्तम्—पञ्चशिखाचार्यैः—आद्यस्तु मोक्षो ज्ञानेनेति।

अत्रादौ भाष्यकार आत्मभावभावनामेव सकारणां प्रतिपादयति—यथेत्यादिना। तत्रापीति। पुरुष इति शेषः। विशेषदर्शनबीजमिति। आत्मभावजिज्ञासाद्वारेति शेषः। इत्यनुमीयत इति। विविदिषन्ति यज्ञेनेत्यादिश्रुतेः,

पापक्षयाद् शुद्धमतिराप्नोति ज्ञानमुत्तमम्

इति स्मृतेश्चेति शेषः। तस्य यथोक्तकर्मवतः, स्वाभाविकी ऐहिकसाधननिरपेक्षा च। तथा यथोक्तं कर्म आत्मभावनायाः कारणम्, तत्र च नैहिकत्वनियम इत्यायातम्, ऐहिकसाधनशून्यस्य प्राक्तनतथाविधकर्माभावे च सा भावना नोदेति प्रत्युत देहाद्यात्मतायामेव रुचिर्भवतीति। अत्र पूर्वाचार्यवाक्यं प्रमाणयति – यस्माभावादिति। यस्य कर्मणोऽभावादिदं वक्ष्यमाणं फलमुक्तं पूर्वाचार्यैः। तदेवाह—स्वभावमिति। स्वभावमात्मभावं त्यक्त्वैषां सत्कर्मशून्यानां पूर्वपक्षेऽनित्यदेहाद्यात्मतायामेव रुचिः श्रद्धाऽऽतिशयो भवति, अरुचिश्च तत्त्वनिर्णय इत्यर्थः। आत्मभावनायाः कारणमुक्त्वा स्वरूपमाह – तत्रात्मेति। कोऽहमासं किं नरादिरूप आसं कथमासं दुःखेन दर्शनवानासं किं स्विदिदं वर्त्तमानमपि मम स्वरूपं किं देहो वा मन आदिर्वा कथं स्विदिदं केन वा प्रकारेण पुण्यपापादिना तिष्ठतीत्यादिरर्थः। के भविष्याम इत्याद्येकत्व[1] एव बहुवचनम्। तथा च यज्जिज्ञासोत्थभयादिनिवृत्तये विशेषदर्शनं पुरुषः संपादयति सैवात्मभावनेत्यर्थः। आत्मभावनामशेषतो व्याख्याय सूत्रवाक्यार्थमाह,—स त्विति। विशेषदर्शनात्कुतो निवृत्तिरिति प्रश्नस्योत्तरमाह—चित्तस्येति। एष भावरूपो विचित्रः परिणाम आत्मनो न भवति कि तु चित्तस्यैवाविद्याजन्यत्वाद्, अविद्यायाश्च चित्तधर्मत्वात्; पुरुषस्त्वविद्याशून्यत्वाच्छुद्धः पापपुण्यविवर्जितः। ततश्च चित्तधर्मैर्जन्ममरणसुखदुःखादिभिरपरामृष्टः कदाऽप्यसंबद्ध इति। तत इति विशेषदर्शनादस्य कुशलस्यात्मभावना निवर्त्तत इत्यर्थः ॥२५॥

---

१. अत्र च अस्मदो द्वयोश्च इति भगवतः पाणिनेरनुशासनम्।

## तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्, तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेकज्ञाननिम्नमिति ॥ २६ ॥

### तत्त्ववैशारदी

अथ विशेषदर्शिनः कीदृशं चित्तमित्यत आह--तदा विवेकनिम्नं कैवल्यप्राभारं चित्तम् । निगदव्याख्यातम् ॥ २६ ॥

### योगवार्त्तिकम्

तन्निवृत्तेः स्वर्गनरकादिषु रागद्वेषादिनिवृत्तिः फलमिति तस्य विशेषदर्शिनो लक्षणं संप्रज्ञातयोगं वक्ष्यमाणमुक्तेश्च कारणभूतमाह—

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् । कैवल्ये प्राग्भारो यस्य तत्कैवल्यप्राग्भारम्, कैवल्याभिमुखमिति यावत् ।

व्याचष्टे—तदानीमिति । तदानीं विशेषदर्शनावस्थायां स्वर्गादिवैराग्यवशात् चित्तमन्यथा भवतीत्यनेनान्वयः । विषयप्राग्भारं विषयाभिमुखम्, अज्ञाननिम्नमज्ञानमार्गसंचारि । एवमुत्तरत्र ॥२६ ॥

## तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा जानामीति वा न जानामीति वा । कुतः ? क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

### तत्त्ववैशारदी

स्यादेतत्—विशेषदर्शनं चेद्विवेकनिष्ठं न जातु चित्तं व्युत्थितं स्यात् । दृश्यते चास्य भिक्षामटतो व्युत्थितमित्यत आह—तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ।

प्रत्ययेति । प्रतीयते येन स प्रत्ययश्चित्तसत्त्वम् । तस्माद्विवेकश्चितेः । तेन निम्नस्य । जानामीति ज्ञानान्मोक्षो विविच्य दर्शितः । न जानामीति मोहः । तन्मूलावहङ्कारममकारावहमस्मीति वा ममेति वा दर्शितौ । क्षीयमाणानि च तानि बीजानि चेति समासः । पूर्वसंस्कारेभ्यो व्युत्थानसंस्कारेभ्यः ॥ २७ ॥

### योगवार्त्तिकम्

न चानेन कोमलकण्टकवद् उत्पन्नमात्रेण विशेषदर्शनेनैव कृतकृत्यता

भवति, पूर्वसंस्कारवशाद् अन्तराऽन्तरा मोहाख्यानां भवदुःखबीजवृत्तीना-मनुवृत्तेरित्याह —

तच्छिद्रेषु प्रत्ययाऽन्तराणि संस्कारेभ्यः ।

व्याचष्टे—विवेकेति । विवेकप्रत्ययनिम्नस्येत्यस्य विवरणं सत्त्वेत्यादि । सत्त्वपुरुषान्यतामात्रेण प्रवहणशीलस्येत्यर्थः । तच्छिद्रेषु स्थानेषु अविद्या-रूपाणां प्रत्ययानामाकारा अस्मिताऽऽद्याश्च प्रदर्शिताः । अस्मीति देवमनु-ष्यादिरूपोऽस्मीत्यर्थः, केवलास्मितायाः संप्रज्ञातयोगेऽपि सत्त्वात् । क्षीयमा-णेभ्यो बीजेभ्यः क्षीयमाणबीजेभ्यः, एतस्य विशेष्यं पूर्वसंस्कारेभ्य इति ॥ २७ ॥

## हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति, तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति । ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते । २८ ॥

### तत्त्ववैशारदी

स्यादेतत्—सत्यपि विवेकविज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते कस्तर्हि हानहेतुरेतेषां यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह—हानमेषां क्लेशवदुक्तम् । अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसुवते न तु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति । यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते । तत्कस्य हेतोः ? तदेते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति । एवं व्युत्थानसंस्कारा अपीति । अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्याः । विवेकसंस्काराश्च निरोधसंस्कारैः । निरोधसंस्काराणां त्वबाह्यविषयत्वं दर्शितम् । निरोधोपायः प्रायश्चिन्तनीय इत्यत आह-ज्ञानसंस्कारास्त्विति । परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

### योगवार्त्तिकम्

ननु ज्ञाने जातेऽपि चेत् पूर्वसंस्कारवशाद्व्युत्थानदशायां कदाचिदविद्योदयः कथं तर्हिसंप्रज्ञातप्रवाहेणाप्यविद्यानिवृत्तिःस्यात् ? तत्राह—

हानमेषां क्लेशवदुक्तम् । एषां संस्काराणां हानं दाहः स्वकार्यासामर्थ्यं क्लेशानामिवोक्तं पूर्वाचार्यैरित्यर्थः । ध्यानहेयास्तद्वृत्तयः, ते प्रतिप्रसवहेयाः सूक्ष्माः इति सूत्राभ्यां यथा स्थूलसूक्ष्मक्लेशानां तत्त्वज्ञानचित्तलयाभ्यां दाहनाशो प्रोक्तौ तथा तत्संस्काराणामपीति फलितार्थः ।

एतदेव व्याचष्टे—**यथेति**। यथा संप्रज्ञातयोगिनो व्युत्थानदशायां पूर्वसंस्कारजाः क्लेशा अविद्याऽऽदिवृत्तयो दग्धबीजतुल्याः सन्तो न संस्कारं जनयन्ति तथा पूर्वसंस्कारा अपि संप्रज्ञातपरंपराजनितेन निष्ठारूपेणज्ञानाग्निना दग्धबीजतुल्याः सन्तः प्रत्ययं न प्रसुवत इत्यर्थः। पूर्वसंस्कारः प्राचीनः क्लेशसंस्कारः। ज्ञानकाले ज्ञानसंस्कारेण प्रतिबन्धात्संस्कारो नोत्पद्यत इत्याशयेन पूर्वपदम्। अत्र ज्ञाननाशोऽपि क्लेशवदुपलक्षित इति। नन्वेकदा चेद् दृष्टं मम जन्म मरणं दुःखादिकं नास्तीति तर्हि कदा चिदन्तराऽन्तरा मोहेऽपि तद्धानार्थं प्रवृत्तिर्नोपपद्यते, मोहस्यापि चित्तधर्मतायाः पूर्वं निश्चितत्वादिति चेत्? न; चितस्य मोहसत्त्वे पुनश्चित्तस्य भवदुःखोत्पत्त्या पुरुषस्य दुःखभोगः स्यादित्याशयेनैव ज्ञानिभिरपि चितस्यात्यन्ततो मोहनिवृत्त्यर्थं यतनात्। भोगश्च चिन्मात्रस्यैवेत्यसकृदावेदितमिति। ननु संस्कारत्वाविशेषात्तत्त्वज्ञानसंस्कारा अपि किं संप्रज्ञातनिष्ठया नश्यन्ति? नेत्याह—**ज्ञानसंस्कारास्त्विति**। अविरुद्धत्वादिति शेषः। तर्हि कथं तेषां नाशः स्यादिति? तत्राह—**इति न चिन्त्यन्त इति**। अधिकारसमाप्तौ चित्तेन सहैव तेषां नाशात्तत्साधनचिन्ता नास्तीत्यर्थः आशुमुमुक्षूणां त्वसंप्रज्ञातेनापि तन्नाशश्चिन्तित इति भावः॥ २८॥

**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः॥ २९॥**

**यदायं ब्राह्मणः प्रसंख्यानेऽप्यकुसीदस्ततोऽपि न किञ्चित्प्रार्थयते। तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते। तदास्य धर्ममेघो नाम समाधिर्भवति॥ २९॥**

### तत्त्ववैशारदी

तदेवं **सूत्रकारो** व्युत्थाननिरोधोपायं प्रसंख्याननिरोधोपायमाह—**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः**। ततः प्रसंख्यानान्न किञ्चित्सर्वभावाधिष्ठातृत्वादि प्रार्थयते। प्रत्युत तत्रापि क्लिश्नाति, परिणामित्वदोषदर्शनेन विरक्तः सर्वथा विवेकख्यातिरेव भवति।

एतदेव विवृणोति—**तत्रापीति**। यदा व्युत्थानप्रत्यया भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिः। यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्वथा विवेकख्यातिरिति। तदास्य धर्ममेघः समाधिर्भवति। एतदुक्तं भवति—प्रसंख्याने विरक्तस्तन्निरोधमिच्छन्धर्ममेघं समाधिमुपासीत। तदु-

पासने च सर्वथा विवेकख्यातिर्भवति। तथा च तं निरोद्धुं पारयतीति ॥ २९ ॥

योगवार्त्तिकम्

उक्तस्य संस्कारहानस्य प्रकारमाह सूत्रद्वयेन—

प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः। प्रसंख्यानं विवेकसाक्षात्कारः, तत्रापि योऽकुसीदः कुबीवलवत् सर्वभावाधिष्ठातृत्वादिरूपां सिद्धिं न प्रार्थयते तस्य योगविघ्नाभावेन सर्वथा निरन्तरं विवेकख्यात्युदयाद् धर्ममेघनाम्नी संप्रज्ञातयोगस्य पराकाष्ठा भवतीत्यर्थः।

तदेतद्व्याचष्टे—यदेति। तत्रापि तत्फलेऽपि। सर्वथाशब्दार्थमाह—संस्कारेति। संस्काररूपस्य बीजस्य क्रमेण क्षयाद्धाहाद्धीयमानाद्धेतोः प्रत्ययान्तराणि अविद्याऽन्तराणि यदा न जायन्ते तदा धर्ममेघसमाधिरित्यर्थः। क्लेशकर्मादीनां निःशेषेणोन्मूलकं धर्मं मेहति वर्षतीति धर्ममेघः ॥ २९ ॥

ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति। कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति। क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान्विमुक्तो भवति। कस्मात्? यस्माद्विपर्ययो भवस्य कारणम्। न हि क्षीणविपर्ययः कश्चित्केनचित्क्वचिज्जातो दृश्यत इति ॥ ३० ॥

तत्त्ववैशारदी

तस्य च प्रयोजनमाह—ततः क्लेशकर्मनिवृत्तिः।

कस्मात्पुनर्जीवन्नेव विद्वान्विमुक्तो भवति? उत्तरम्—यस्मादिति क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम्। न चासति निदाने निदानी भवितुमर्हति। यथाहात्र भगवानक्षपादः—वीतरागजन्मादर्शनात् इति ॥ ३० ॥

योगवार्त्तिकम्

अस्य समाधेर्धर्मद्वारकफलं द्वितीयमोक्षमाह—

ततः क्लेशकर्मनिवृत्तिः। दाहः समाप्तिः।

व्याचष्टे—तल्लाभादिति। समूलकाषमिति। मूलं क्लेशसंस्कारास्तैः सह क्लेशा अभिनिवेशारिक्ताश्छिन्ना भवन्ति, अत एव कर्माशयाश्च प्रारब्धातिरिक्ताः क्लेशाख्यमूलेन सह हताः स्युरतो न पुनरुत्पद्यन्त इत्यर्थः।

ननु दुःखात्यन्तनिवृत्तिरेव मोक्षः, जीवतश्चावश्यं दुःखम्, न ह वै सशरीरस्य प्रियाप्रिययोरहतिरस्ति इति श्रुतेः, तत्कथं जीवन्मुक्तिरित्याशयेन पृच्छति—कस्मादिति। उत्तरम्—यस्मादिति। तथा च दुःखनिदानात्यन्तोच्छेदाय गौणमुक्तित्वमिति भावः। अत्र प्रमाणमनुपलब्धिमाह—न हीति। तदुक्तं गोतमाचार्यैः—वीतरागजन्मादर्शनात् इति। अयमपि मोक्षः पञ्चशिखाचार्यैरुक्तः— द्वितीयो रागसंक्षयादिति। अत्र जीवन्मुक्तस्य सवासनक्लेशात्यन्तदाहनिर्णयाद् आधुनिकवेदान्तिनामविद्याक्लेशस्वीकारोऽविद्यामूलक एवेति स्मर्तव्यम् ॥३०॥

**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥३१॥**

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानन्त्यं भवति। आवरकेण तमसाभिभूतमावृतमनन्तं ज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्तितमुद्घाटितं ग्रहणसमर्थं भवति। तत्र यदा सर्वैरावरणमलैरपगतं भवति तदाभवत्यस्यानन्त्यम्। ज्ञानस्यानन्त्याज्ज्ञेयमल्पं संपद्यते; यथा—आकाशे खद्योतः। यत्रेदमुक्तम्—

अन्धो मणिमविध्यत्तमनङ्गुलिरावयत्।
अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत् ॥इति॥ ३१ ॥

तत्त्ववैशारदी

अथैवं धर्ममेघे सति कीदृशं चित्तमित्यत आह—तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्। आव्रियते चित्तसत्त्वमेभिरित्यावरणानि मलाः क्लेशकर्माणि। सर्वे च त आवरणमलाश्चेति सर्वावरणमलाः। तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य ज्ञायतेऽनेनेत्यनया व्युत्पत्त्या, आनन्त्यादपरिमेयत्वाज्ज्ञेयमल्पम्। यथा हि शरदि घनपटलमुक्तस्य चण्डार्चिषः परितः प्रद्योतमानस्य प्रकाशानन्त्यात्प्रकाश्या घटादयोऽल्पाः प्रकाशन्त एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति।

तदेतदाह—सर्वैरिति। एतदेव व्यतिरेकमुखेन स्फोरयति—आवरकेण तमसाभिभूतमिति। क्रियाशीलेन रजसा प्रवर्तितमत एवोद्घाटितम्। प्रदेशादपनीतं तम इत्यर्थः। अत एव सर्वान्धर्माञ्ज्ञेयान्मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते। नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः, अथ सत्यप्यस्मिन्कस्मान्न जायते पुनर्जन्तुरित्यत आह—यत्रेदमुक्तमिति। कारणसमुच्छेदादपि चेत्कार्यं क्रियते हन्त भो मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः। तथा चानुपपन्नार्थतायामाभाणको

लौकिक उपपन्नार्थः स्याद्—अविध्यदन्धो मणिमिति । आवयद् ग्रथितवान् । प्रत्यमुञ्चदपिनद्धवान् । अभ्यपूजयत्स्तुतवानिति ॥ ३१ ॥

योगवार्त्तिकम्

इदानीं जीवन्मुक्तस्य परममुक्तिप्रकारमाह सूत्रद्वयेन—

तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज् ज्ञेयमल्पम् । तदा तस्यां जीवन्मुक्तावस्थायां क्लेशकर्मणोर्ज्ञानावरकमलयोरपगमेन हेतुना ज्ञानस्य सत्त्वप्रकाशस्यानन्त्यादिति विभुत्वात् ज्ञेयं प्रकाश्यमल्पं तदपेक्षया भवतीत्यर्थः । यदि हि पञ्चविंशतितत्त्वातिरिक्तमन्यदपि वस्तु तिष्ठेत् तदा तदपि प्रकाश्येत, ज्ञेयस्यैव स्वल्पतयाऽन्यन्न प्रकाश्यते न तु सत्त्वस्याल्पतयेति भावः ।

तदेतद्व्याचष्टे—सर्वैरिति । अनन्तं स्वभावतो व्यापकम्, ज्ञानं सत्त्वमिति भूतसत्त्वव्यावर्त्तनायोक्तम् प्रवर्त्तितमिति । अस्य विवरणम्—उद्घाटितमिति । शेषं भाष्यं सुगमम् । अत्र तमोऽभिभवनानन्तरमेव वृत्त्युत्पत्तिवचनाद् वृत्तेस्तमोनाशकत्वमाधुनिकवेदान्तिनामपसिद्धान्त इति स्मर्त्तव्यम् । एतादृशं सर्वज्ञत्वं लोकेऽतीवाश्चर्यमन्धमणिवेधादिवदिति बौद्धोपहासमुखेन दर्शयति—यत्रेदमिति । यत्र क्षुद्राणामपि जीवानां योगबलादेतादृशसार्वज्ञ्ये बौद्धैरिदं दृष्टान्तजातमसम्भवदर्शनायोक्तमुपहसद्भिरित्यर्थः । किं तत् ? तदाह—अन्ध इत्यादि । अविध्यत्सच्छिद्रमकरोत्, तं मणिमङ्गुलिहीनम् आवयद् ग्रथितवान्, तं मणिं ग्रीवाशून्यः प्रत्यमुञ्चत्, कण्ठाभरणमकरोत्, तत् कण्ठाभरणं जिह्वाशून्यः स्तुतवानित्यर्थः । दृष्टान्तचतुष्टयस्यायमाशयः—अनाद्यविद्यामूढचित्तैः सांख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवादावशक्यं ततश्च तस्य सूक्ष्मार्थस्याविरलवृत्तिसत्ता च, सूत्रेण ग्रन्थनमप्यशक्यम, ततोऽपि सर्वथा विवेकख्यातिरतीवाशक्या, ततश्च तादृशचित्तस्य परिपूर्णज्ञानत्वेन स्तुतिरप्यशक्येति । आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येनैतत्सर्वं श्रद्धेयमिति भावः ॥३१॥

ततः कृतार्थानां परिणामक्रमपरिसमाप्तिर्गुणानाम् ॥ ३२ ॥

तस्य धर्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते । न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

तत्त्ववैशारदी

ननु धर्ममेघस्य परा काष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु

व्युत्थानसमाधिसंस्कारान्सक्लेशकर्माशयान्, गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्त इत्यत आह—ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम्। शीलमिदं गुणानां यदमी यं प्रति कृतार्थास्तं प्रति न प्रवर्तन्त इति भावः ॥३२॥

योगवार्त्तिकम्

यथोक्तसार्वज्ञ्यात् परवैराग्योदयेनासम्प्रज्ञातपरम्पराजन्यं प्रारब्धभोगसमाप्तिजन्यं वा तृतीयं मुख्यमोक्षमाह--

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ततो धर्ममेघोदयात् क्लेशकर्मनिवृत्त्या ज्ञानस्यानन्त्ये सति परवैराग्येण पुरुषार्थसमाप्त्या कृतार्थान् पुरुषान् प्रति गुणानां सत्त्वादीनां परिणामक्रमः समाप्यते, कृतार्थपुरुषाणां भोगोपयिकः परिणामः पुनर्न भवतीत्यर्थः। क्रमश्चाविरलधारेत्युत्तरसूत्रेण व्याख्यास्यते।

तत्र इतिपदं व्याचष्टे—तस्य धर्ममेघस्योदयादिति। कृतार्थानामिति पुरुषाणामिति शेषः। तथा च कृतार्थपुरुषस्वामिको गुणानां परिणामक्रमः समाप्यत इत्यर्थः, न तु गुणानामखिलस्य परिणामक्रमस्य समाप्तिरत्रोक्ता कृतार्थं प्रति नष्टमप्यनष्टमित्युत्तरसूत्रादिति। समाप्तौ हेतुमाह—न हीति। नहि सत्त्वादयो गुणाः कृतभोगापवर्गा अत एव समाप्तक्रमाः तं पुरुषं प्रति क्षणमप्यवस्थातुं समर्थाः, स्थितिहेतुपुरुषार्थाभावादिति। यदि च सूत्रभाष्ययोर्गुणशब्देनात्र बुद्ध्यादय एव पुरुषोपकरणान्युच्यन्ते तदा यथाश्रुतमेव व्याख्येयम्। अत्राचेतनानां चेतनार्थतया चैतन्याधीनसत्ता वेदान्तिभिरुच्यमाना सिद्धेति स्मर्त्तव्यम्। इयमपि तृतीया मुक्तिः पञ्चशिखाचार्यैरुक्ता-कृच्छ्रक्षयात् तृतीयस्तु व्याख्यातं मोक्षलक्षणमिति। अतएव तत्त्वसमाससूत्रम्—त्रिविधो मोक्ष इति। इदमत्रावधेयम्—यदेताभ्यां सूत्राभ्यां ज्ञानस्यानन्त्यात्सार्वज्ञ्याख्यान् मोक्ष उच्यत इदं मुख्यकल्पाभिप्रायेणोक्तम्, वैराग्यादेव सुखेन मोक्षसिद्धेः, न तु सार्वज्ञ्यादिकं विना मोक्षो न भवतीत्याशयेन, यतः सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति सूत्रे भाष्यकृता—ईश्वरस्यानीश्वरस्य प्राप्तविवेकज्ञानस्येतरस्य वेत्यनेनासर्वज्ञस्याप्यभिमाननिवृत्तिमात्रादेव मोक्ष उक्त इति। तथा चोक्तं विवेकख्यातिरविप्लवा हानोपाय इति, सति मूले तद्विपाका जात्यायुर्भोगाः इति च। संसारबीजं ह्यनात्मन्यात्मरूपाऽविद्या, रागद्वेषधर्माधर्मतद्विपाकादिहेतुत्वात्, सा चेद्विवेकख्यात्या नाशिता तर्हि तत एव संसारोच्छेदे सार्वज्ञ्याद्यपेक्षा नास्तीति। तथा च विष्णुपुराणम्—

अनात्मन्यात्मबुद्धिर्याऽनर्थे स्वमिति या मतिः।
अविद्यातरुसंसूतिबीजमेतद् द्विधा स्थितम् ॥ ३२ ॥

अथ कोऽयं क्रमो नामेति ?

क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ।। ३३ ।।

क्षणानन्तर्यात्मा परिणामस्यापरान्तेनावसानेन गृह्यते क्रमः। न ह्यननुभूतक्रमक्षणा नवस्य पुराणता वस्त्रस्यान्ते भवति। नित्येषु च क्रमो दृष्टः।

द्वयी चेयं नित्यता—कूटस्थनित्यता परिणामिनित्यता च। तत्र कूटस्थनित्यता पुरुषस्य। परिणामिनित्यता गुणानाम्। यस्मिन्परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम्। उभयस्य च तत्त्वानभिघातान्नित्यत्वम्। तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानः, नित्येषु धर्मिषु गुणेष्वलब्धपर्यवसानः। कूटस्थनित्येषु मुक्तपुरुषेषु स्वरूपास्तितता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय कल्पित इति।

अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्तमानस्यास्ति क्रमसमाप्तिर्न वेति ? अवचनीयमेतत्। कथम् ? अस्ति प्रश्न एकान्तवचनीयः—सर्वो जातो मरिष्यति इति। ॐ भो इति।

अथ सर्वो मृत्वा जनिष्यत इति ? विभज्य वचनीयमेतत्। प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यत इतरस्तु जनिष्यते। तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः पशूनधिकृत्य श्रेयसी देवानृषींश्चाधिकृत्य नेति। अयं त्ववचनीयः प्रश्नः-संसारोऽयमन्तवानथानन्त इति। कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येत्यन्यतरावधारणेऽदोषः। तस्माद्व्याकरणीय एवायं प्रश्न इति ।। ३३ ।।

तत्त्ववैशारदी

अत्रान्तरे परिणामक्रमं पृच्छति—अथ कोऽयमिति। क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः। परिणामक्रमः क्षणप्रतियोगी, क्षणः प्रतिसंबन्धी यस्य स तथोक्तः, क्षणप्रचयाश्रय इत्यर्थः। न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुम्। न चैकस्यैव क्षणस्य क्रमः। तस्मात्क्षणप्रचयाश्रयः परिशिष्यते।

तदिदमाह—क्षणानन्तर्यात्मेति। परिणामक्रमे प्रमाणमाह—परिणामस्येति। नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते। सोऽयं परिणामस्यापरान्तः पर्यवसानम्। तेन हि परिणामस्य क्रमः। ततः

प्रागपि पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलस्थूलतरस्थूलतमत्वादीनां पौर्वापर्यमनुमीयते। एतदेव व्यतिरेकमुखेन दर्शयति—**न हीति**। अननुभूतोऽप्राप्तः क्रमक्षणो यया सा तथोक्ता। नन्वेष क्रमः प्रधानस्य न संभवति, तस्य नित्यत्वादित्यत आह—**नित्येषु चेति**। बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रतिजानीते।

तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति—**द्वयीति**। ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यम्, परिणामि सदैव स्वरूपाच्च्यवमानं कथं नित्यमित्यत आह—**यस्मिन्निति**। धर्मलक्षणावस्थानामुदयव्ययधर्मत्वम्, धर्मिणस्तु तत्त्वादविघात एवेति। अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वक्रमस्य? नेत्याह—**तत्र गुणधर्मेषु बुद्ध्यादिष्विति**। यतो लब्धपर्यवसानो धर्माणां विनाशात्। प्रधानस्य तु परिणामक्रमो न लब्धपर्यवसानः। ननु प्रधानस्य धर्मरूपेण परिणामादस्तु परिणामक्रमः; पुरुषस्य त्वपरिणामिनः कुतः परिणामक्रम इत्यत आह—**कूटस्थेति**। तत्र बद्धानां चित्ताव्यतिरेकाभिमानात्तत्परिणामेन परिणामाध्यासः। मुक्तानां चास्तिक्रियामुपादायावास्तवोऽपि परिणामो मोहकल्पितः, शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्तिक्रियामुपादत्त इति।

गुणेष्वलब्धपर्यवसानः परिणामक्रम इत्युक्तम्। तदसहमानः पृच्छति—**अथेति**। **स्थित्येति** महाप्रलयावस्थायाम्। **गत्येति** सृष्टौ। एतदुक्तं भवति-यद्यानन्त्यान्न परिणामसमाप्तिः संसारस्य, हन्त भोः कथं महाप्रलयसमये सर्वेषामात्मनां सहसा समुच्छिद्येत, कथं च सृष्ट्यादौ सहसोत्पद्येत संसारः? तस्मादेकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारस्य क्रमेणेति प्रधानपरिणामक्रमपरिसमाप्तिः। एवं च प्रधानस्याप्यनित्यत्वप्रसङ्गः। न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात्, तथा सत्यनादित्वव्याहतेः सकलशास्त्रार्थभङ्गप्रसङ्ग इति भावः। उत्तरमाह—**अवचनीय**मनुत्तरार्हमेतत्। एकान्तत एव तस्यावचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति—**अस्ति प्रश्न** इति। सर्वो जातो मरिष्यतीति प्रश्नः। उत्तरम्—**ॐ भो** इति। सत्यं भो इत्यर्थः।

अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयं प्रश्नमाह—**अथ सर्व** इति। विभज्य वचनीयतामाह—**विभज्येति**। विभज्य वचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह – **तथा मनुष्येति**। **अयम् त्ववचनीय** एकान्ततः। न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुम्, यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं वा नैकान्ततः शक्य-

मवधारयितुम्। यथा जातमात्रस्य मरणमेकान्तः। विभज्य पुनः शक्यावधारणमित्याह—कुशलस्येति। अयमभिसंधिः–क्रमेण मोक्षे सर्वेषां मोक्षात्संसारोच्छेद इत्यनुमानम्। तच्चागमसिद्धमोक्षाश्रयम्। तथा चाभ्युपगतमोक्षप्रतिपादकागमप्रमाणभावः कथं तमेवागमं प्रधानविकारनित्यतायामप्रमाणीकुर्यात्। तस्मादागमबाधितविषयमेतदनुमानं न प्रमाणम्। श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्पराया अनादित्वमनन्तत्वं चेति। अपि च सर्वषामेवात्मनां संसारस्य न तावद्युगपदुच्छेदः संभवी। न हि पण्डितरूपाणामप्यनेकजन्मपरम्पराभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा, किं पुनः प्राणभृन्मात्रस्य स्थावरजङ्गमादेरेकदाऽकस्मान्द्भवितुमर्हति। न च कारणायौगपद्यं युज्यते। क्रमेण तु विवेकख्यातावसंख्येयानां क्रमेण मुक्तौ न संसारोच्छेदो ऽनन्तत्वाजन्तूनामसंख्येयत्वादिति सर्वमवदातम्॥ ३३॥

## योगवार्त्तिकम्

ननु परिणामसमाप्तिरिति वक्तव्ये क्रमशब्दः परिणामानां प्रतिक्षणमुत्पादविनाशकथनेन वैराग्योत्पादनाय प्रयुक्तः, स चायमर्थः कथम्, क्रमशब्दस्य पौर्वापर्यमात्रवाचित्वादित्याशयेन क्रमशब्दार्थं पृच्छति—अथेति। अयमेतत्सूत्रीयः। अत्र प्रत्युत्तरं सूत्रम्—

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः।** क्षणप्रतियोगी क्षणस्यावसरस्य विरोधी क्षणेनाप्यनन्तरित इति यावत्। एवंरूपोऽत्र क्रमो विवक्षितो न तु पौर्वापर्यमात्रमिति विशेष्यदलार्थः। परिणामश्च **पूर्वधर्मापाये धर्मान्तरोत्पत्तिरि**त्युक्तमेव। ईदृशे च क्रमे प्रमाणप्रदर्शनपरं परिणामापरान्तनिर्ग्राह्य इति विशेषणम्।

**भाष्यकारस्तु** क्षणप्रतियोगीत्यस्य पर्यवसितार्थमाह—**क्षणानन्तर्यात्मेति**। क्रम इत्युत्तरेणान्वयः। क्षणानन्तर्यात्मा क्षणानन्तर्यधर्मकः, आनन्तर्यं चाव्यवधानं क्रमस्तु पूर्वापरीभावः। तथा च क्षणाव्यवहितपरिणामधारा पूर्वसूत्रे परिणामक्रमशब्दार्थः। अनवच्छिन्नधारायाः प्रमाणप्रदर्शकं सूत्रावयवं व्याचष्टे—**परिणामस्येति**। पूर्वान्तापेक्षया वस्त्रादिरूपस्य परिणामस्यापरान्तेन चरमावस्थयाऽनवच्छिन्नपरिणामधाराऽनुमीयत इत्यर्थः। अत्र युक्तिमाह—**न हीति**। अननुभूतोऽप्राप्तो यथोक्तक्रमो यैरेवम्भूताः क्षणा यस्याः साऽननुभूतक्रमक्षणा पुराणता। तथा च वस्त्रस्यान्तकाले दृश्यमाना पुराणता न ह्यननुभूतक्रमक्षणा सम्भवतीत्यर्थः। अतः पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलादिरूपैः परिणामक्षणेऽप्यविरलः क्रमोऽनुमीयत इति। नन्वपरान्तेनानित्येष्वेव क्रमः सिद्धो न तु प्रधानेऽपि, तस्य चरमावस्थाया

अभावात् ; अतो गुणानां परिणामक्रमे किं प्रमाणं येन तत्समाप्तिः पूर्वसूत्रोक्ता घटेत ? तत्राह— नित्येषु चेति । नित्येषु स्वतोऽपरान्ताभावेऽपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामो दृष्टोऽनुमित इत्यर्थः, धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति प्रागुक्तत्वादिति भावः ।

ननु परिणामक्रमाङ्गीकारे नित्यत्वहानिरित्याशङ्कायामाह—द्वयी चेति । तथा च परिणामित्वेन कूटस्थनित्यतैव विरुध्यते न नित्यतासामान्यमित्याशयः । नित्यस्य सामान्यलक्षणमाह—यस्मिन्निति । तत्त्वं न विहन्यते स्वरूपं नातीतं भवति । अत्र चातीतताशून्यत्वमात्रं नित्यत्वस्य सामान्यलक्षणमिति बोध्यम्; तच्चोभयसाधारणमित्याह—उभयस्येति । गुणपुरुषयोरित्यर्थः । पूर्वसूत्रे परिणामशब्देन व्यावर्त्यं स्वरूपास्तिताक्रमं दर्शयितुं क्रमसामान्यं विभजते-तत्रेति । बुद्ध्यादिषु महदादिषु लब्धपर्यवसानो विनाशित्वादित्यर्थः । गुणेष्विति । अत्रापि परिणामापरान्तनिर्ग्राह्य इत्यन्वेति । परिणामस्य क्रमं द्विधा व्याख्याय तृतीयं स्वरूपास्तितायाः क्रममसङ्कीर्णोदाहरणेनाह—कूटस्थेति । बद्धानां चित्ताविवेकेन कदाचित्परिणामाध्यासोऽपि स्यादित्याशयेन स्वरूपमात्रप्रतिष्ठेष्वित्युक्तम्, तस्यैव स्वरूपाख्यानम्-मुक्तपुरुषेष्विति । स्वरूपास्तिता च तत्तत्क्षणमात्रं तत्क्रमश्च पुरुषेष्वप्यस्ति, इदानीं स्थित्वा पश्चात्स्थास्यतीति व्यवहारात् , अन्यथा सर्वकालसम्बन्धरूपनित्यताऽनुपपत्तेश्चेत्यतः—यत्राप्यलब्धपर्यवसान इति । क्रम इति शेषः । नन्वेवमात्मनोप्यस्तिताक्रमस्वीकारे षड्भावविकारशून्यत्वसिद्धान्तविरोध इत्याशङ्कां परिहरति—शब्दपृष्ठेनेति । स च क्रमोऽस्त्याख्यक्रियामादायैव शब्दपृष्ठेन शब्दानुसारिणा व्यवहर्त्रा कल्पितो भवति, न तु जन्मोत्तरकालीनमस्तितापरिणाममादायेत्यर्थः । तथा चास्तित्वाख्यक्रियैव षड्भावविकारान्तर्गता पुरुषे निषिद्धेत्याशयः । सा च क्रियारूपिण्यस्तिता वृद्धिहेत्ववयवोपचयरूपेति विभागः ।

गुणेष्वलब्धपर्यवसानः परिणाम इति श्रुत्वाऽऽक्षिपति—अथेति । अस्य संसारस्य जन्मादिपरिणामजातस्य स्थित्या गत्या च गुणेषु वर्त्तमानस्य सृष्टिप्रलयप्रवाहेणावस्थितस्य क्रमसमाप्तिरस्ति न वा ? आद्ये अलब्धपर्यवसानोक्तिविरोधः, अन्त्ये परिणामक्रमसमाप्तिर्गुणानामिति पूर्वसूत्रविरोधः, तथा भूयश्चान्ते विश्वमायानिवृत्तिरितिश्रुतिविरोधश्चेति ? पूर्वसूत्रे कृतार्थपुरुषं प्रत्येव परिणामक्रमसमाप्तिर्गुणानामुक्ता न तु सामान्यत इत्याशयेन समाधत्ते—अवचनीयमेतदिति । प्रत्युत्तरानर्हमेतद्भवद्वचनमित्यर्थः । उक्तप्रश्नस्योत्तरानर्हत्वं प्रतिपादयितुम् आदावुत्तरार्हं द्विविधप्रश्नं दर्शयति—अस्ति प्रश्न इति । सर्वो जातो मरिष्यतीत्येकान्तवचनी-

योऽविभज्य वचनीयः प्रश्नः, अस्य च ओम् इति प्रतिवचनम्, सत्यं भो इत्यर्थः। ओं भो इति पाठस्तु समीचीनः।

अविभज्यवचनीयं प्रश्नं प्रदर्श्य विभज्यवचनीयं प्रश्नान्तरं प्रदर्शयति—**अथ सर्वो मृत्वा जनिष्यत** इति। विभागेन वचनं प्रत्युत्तरं दर्शयति—**प्रत्युदितेति**। विभज्यवचनीयप्रश्नं लौकिकमपि दर्शयति—**तथा मनुष्येति**। उक्तप्रश्नस्तु यथाश्रुत एकान्तत एवावचनीय इत्याह—**अयं त्विति**। अयमित्युक्तं विशिष्याह—**संसार** इति। अवचनीयत्वमेवोपपादयति—**कुशलस्येत्यादिना-दोष** इत्यन्तेन। कुशलस्य कुशले गुणाकृतस्य संसारक्रमस्य समाप्तिरस्ति नेतरस्मिन्नित्यतो गुणसृष्टिप्रलयप्रवाहोच्छेदानुच्छेदान्यतरावधारणे दोषः, आद्ये बाधोऽन्त्ये कस्यापि मुक्तिर्नास्तीति शिष्यमोहापत्तिरित्यर्थः। अस्यापि प्रश्नस्य विकल्प्योत्तरं देयमित्याह—**तस्मादिति**। तस्मादुत्तरदानार्थमादौ विकल्पेन व्याख्येयोऽयं प्रश्न इत्यर्थः। तद्यथा—यदि च गुणानां सृष्ट्याद्युच्छेदः पृच्छ्यते तदा नास्तीत्येव वक्तव्यम्,

अनादिर्भगवान् कालो नान्तोऽस्य द्विज! विद्यते।
अव्युच्छिन्ना यतस्त्वेते सर्गस्थित्यन्तसंयमाः॥

इत्यादिवाक्यशतेभ्यः सृष्टिप्रवाहस्यानादित्ववदनन्तत्वस्यापि सिद्धेः शुष्कतर्कस्याप्रयोजकत्वात्, अन्यथा संसारहेत्वदृष्टस्य सर्वस्यैव सादित्वात्संसारस्यानादित्वमपि तर्कविरोधेन न सिध्येत्। भूयश्चान्ते विश्वमायानिवृत्तिरिति श्रुतिश्च मायाऽऽख्यप्रकृतेः प्रलये व्यापारोपरमाख्यां निवृत्तिमेव वदति। एतेन सर्वमुक्तिरप्रामाणिकीति सिद्धम्॥ ३३॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तम्। तत्स्वरूपमवधार्यते—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति॥ ३४॥**

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकारणात्मकानां गुणानां तत्कैवल्यम्, स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभिसम्बन्धात्पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति॥ ३४॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे व्यासभाष्ये
कैवल्यपादश्चतुर्थः॥ ४॥



तत्त्ववैशारदी

कैवल्यस्वरूपावधारणपरस्य सूत्रस्यावान्तरसंगतिमाह—गुणाधिकारेति। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति।

कृतकरणीयतया पुरुषार्थशून्यानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयस्तेषां कार्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्ग इति। योऽयं गुणानां कार्यकारणात्मकानां प्रतिसर्गस्तत्कैवल्यम्, यं कञ्चित्पुरुषं प्रति प्रधानस्य मोक्षः। स्वरूपप्रतिष्ठा वा पुरुषस्य मोक्ष इत्याह—स्वरूपेति। अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिः, न चासौ मोक्ष इत्यत आह—पुनरिति। सौत्र इतिशब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

मुक्त्यर्हचित्तं परलोकमेयज्ञसिद्धयो धर्मघनः समाधिः।
द्वयी च मुक्तिः प्रतिपादितास्मिन्पादे प्रसङ्गादपि चान्यदुक्तम् ॥ १ ॥

निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि।
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरो
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥ २ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां तत्त्ववैशारद्यां कैवल्यपादश्चतुर्थः ॥ ४ ॥



योगवार्त्तिकम्

यदि पुरुषस्य संसारोच्छेदः पृच्छ्यते तदा कुशलस्यास्ति नेतरस्येति प्रश्नवाक्यं विकल्प्य प्रतिवचनं संभवतीति उत्तरसूत्रमवतारयति—गुणाधिकारेति। गुणाधिकारः परिणामविशेषस्तत्क्रमपरिसमाप्तौ कैवल्यमिति ततः कृतार्थानामित्यादिसूत्रेण तात्पर्यतः प्रोक्तम्, तस्य कैवल्यस्य स्वरूपमवधार्यत इत्यर्थः।

पुरुषार्थशून्यानां गुणानां प्रतिसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति। कृतकर्त्तव्यतया पुरुषार्थशून्यानां पुरुषोपकरणानां लिङ्गशरीरात्मकानां प्रतिप्रसवः स्वकारणेऽत्यन्तविलयः, स बुद्धेः कैवल्यम्, एतदेव च

प्रधानस्यापि ज्ञानिपुरुषं प्रति कैवल्यमुच्यते, तेन पुरुषेण सह पुनरसंयोगाद् । या तु धर्मधर्म्यभेदाच्चितिशक्तिः स्वरूपिणी स्वरूपप्रतिष्ठा बुद्धिसत्त्वोपाधिकरूपशून्यतारूपा जपापाये स्फटिकस्वरूपप्रतिष्ठावत् सा पुरुषस्य कैवल्यमित्यर्थः । परस्पराबियोगो ह्युपाध्युपाधिमतोरुभयोरेव केवलता एकाकिता भवति, ते चोभे एव दुःखभोगनिवृत्त्याख्यपुरुषार्थसाधने भवत इति द्वे एव कैवल्ये लक्षिते । तयोश्चाद्यं कैवल्यं पुरुषस्योपचरितमित्युक्तं सांख्यकारिकायाम्—

तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाऽऽश्रया प्रकृतिः ॥ इति ।

न तु स्वरूपप्रतिष्ठारूपं कैवल्यं दुःखभोगात्यन्तनिवृत्तिरूपो वा पुरुषार्थः पुरुषस्य तत्र निराकृतः, मोक्षस्यान्यमात्रनिष्ठत्वेऽपुरुषार्थत्वे मोक्षार्थं प्रवृत्त्यनुपपत्तेः, पुरुषार्थं हि करणानां प्रवृत्तिरिति । इतिशब्दः शास्त्रसमाप्तिसूचनार्थः ।

भाष्ये—कार्यकारणात्मनामिति । कार्यकारणभावापन्नानां महदादिसूक्ष्मभूतपर्यन्तानां लिङ्गशरीरघटकानामित्यर्थः, न तु कार्यमत्र स्थूलशरीरम्, तत्सत्त्वेऽपि कैवल्योदयादिति । ननु स्वस्य स्वप्रतिष्ठत्वानुपपत्त्या कथं स्वप्रतिष्ठत्वम् ? तत्राह–स्वरूपेति । पुरुषस्य पुनर्बुद्धिसत्त्वासंबन्धात् केवला चितिशक्तिरेव स्वरूपप्रतिष्ठेत्यर्थः । तस्य इति । स्वरूपप्रतिष्ठायां सदैवावस्थानं पुनरप्रच्यवः कैवल्यं द्वितीयमिति शेषः ॥ ३४ ॥

योगग्रन्थसहस्राणां सर्वोपनिषदां तथा ।
सतां च यत्र तात्पर्यं सोऽर्थो व्यासेन भाषितः ॥
व्याख्यातश्च यथाशक्ति निर्मत्सरधिया मया ।
एतेन प्रीयतामीशो य आत्मा सर्वदेहिनाम् ॥

श्रीविज्ञानभिक्षुविरचिते पातञ्जलभाष्यवार्त्तिके कैवल्यपादश्चतुर्थः ॥ ४ ॥

---

समाप्तमिदं तत्त्ववैशारदी-योगवार्त्तिकविभूषितव्यासभाष्यसमेतं पातञ्जलयोगसूत्रम् ॥

प्रथमं परिशिष्टम्

## पातञ्जलयोगसूत्रानुक्रमणी



---

१. पञ्च इति नागेशमते न सूत्रस्याङ्गम् । भोजविवरणकारयोरप्ययमेवाभिप्रेतः पाठः प्रतीयते । अवतरणभाष्ये कियन्तो वा ? इत्युक्तत्वात् पञ्च इति सूत्राङ्गमिति प्रतीमः ।

२. तत्र अहिंसा० इति पाठो विज्ञानभिक्षु भावागणेशयोरनुमतः । ( मूलपुस्तके वार्तिके अभावात् तत्र इति लघ्वक्षरैः मुद्रितः संशोध्यो धीरैः । )

३. चोभयानवधारणात् इति चन्द्रिकेष्टः पाठः । भोजस्याप्येतदभिमतं भवेत् ।

---

१. चक्षुःप्रकाशाऽसंयोगे इति भोजानन्तदेवौ पठतः । भावागणेशेनाऽपि असंयोगेऽन्तर्धानमिति पठनात् एष एवानुमोदित इति प्रतीयते । विज्ञानभिक्षु-नागेशयोः प्रतीकपाठे प्रकाशाऽसम्प्रयोगे इत्यस्योपलम्भेऽपि व्याख्याने असंयोगे इत्येव दृश्यते ।

अतः परम् चन्द्रिका-योगसुधाकरयोः एतेन शब्दाद्यन्तर्धानमुक्तम् इत्यधिकं सूत्रमुपलभ्यते । परन्तु इदं कायसंयमसूत्रस्थभाष्यवाक्यमेवेति वाचस्पत्यादिस्वरसः ।

२. परिणामोऽपरान्तनिर्ग्राह्यः इति चन्द्रिकाधृतः पाठः ।

१. अत्र एते जाति० इति चन्द्रिकाभिमतम्। परन्तु भाष्ये ते तु ( विवरणे० एते तु ) इति पठनात्प्रामादिक एवायमिति विद्मः।

२. ततः इति भोजवृत्ति-चन्द्रिकयोरनभिमतम्।
क्रमपरिसमाप्तिः इति पाठो भोजवृत्ति-मणिप्रभा-विवरण-चन्द्रिकासु। भाष्यस्वरसोऽप्येवमेवेति प्रतीयते। वाचस्पत्यादिस्वरसस्तु क्रमसमाप्तिः इत्यत्र। मूले तु भाष्यस्वरससिद्धः पाठः स्थापितः।

३. परमवश्यता इति समस्तः पाठः क्वचित्।

४. मणिप्रभा-चन्द्रिका-योगसुधाकरेषु ततः पुनः इति सूत्रे न पठ्यते। विवरणे तु तत्र पुनः इति पाठान्तरम्।

---

१. सार्वज्ञ्यबीजम् इति वार्तिकधृतपाठान्तरम् । नागेशवृत्तिप्रतीकपाठोप्येव मेव । परन्तु नागेश-भोज-भावागणेश - रामानन्दानन्तेदववृत्त्यनुसन्धानेन सर्वज्ञत्वबीजम् इति पाठः स्यादिति प्रतीयते ।

२. तदभावे० इति भोजानन्तदेवौ पठतः ।

३. सर्वावरणापेतस्य इति चन्द्रिकापाठः ।

४. प्रान्तभूमौ प्रज्ञा इति भोजानन्तदेवयोरभिमत : पाठः ।

---

१. अत्र अधिमात्रोपायानाम् तीव्र० इति सूत्रपाठो विज्ञानभिक्षु-भावागणेशयोरनुमतः। अधिमात्रोपायानाम् इति भाष्यमेवेति वाचस्पत्यादिमतम्।

२. आशिषो० इति चकाररहितः पाठः चन्द्रिकादिसम्मतः।

३. एतच्च न सूत्रम् इति वाचस्पतिः। नागेशोप्यनुसरति एनम्। अन्ये तु सूत्रत्वमस्य ब्रुवते।

४. दुःखानुजन्मा द्वेषः इति विवरणधृतः पाठः। प्रकृतपाठोपि तत्र पाठान्तरतयोपन्यस्तः।

५. देशसम्बन्धश्चित्तस्य० इति क्वचिद्भोजवृत्तौ पाठः। देशे चित्तस्य बन्धः इत्यपि पाठान्तरं कल्पयितुं शक्यम्।

---

१. न सालम्बनम्० इति मणिप्रभायां पाठः। न च सालम्बनम्० इति तु विवरणे। किन्तु विज्ञानभिक्षु-भावागणेश-नागेशानां मते भाष्यवाक्यमेवै-तदिति प्रतीयते।

२. इदं भाष्यवाक्यमेवेति वाचस्पतिस्वरसः। विवरणकारस्यापि एतदिष्टं स्यात्। चन्द्रिकायां भोजवृत्तावपि न व्याख्यातम्। तत्प्रमाणकम् इति वार्तिकादिसम्मतः पाठः।

३. अत्र गुणवृत्त्यविरोधाच्च इति पाठो भिक्षुभावागणेश-नागेशानामभिमतः। गुणवृत्तिविरोधात् इत्यस्य सुव्याख्येयत्वेऽपि प्रामादिकोयं पाठ इत्यपि भिक्षुः।

४. चितिशक्तेः इति भोजानन्तदेवौ पठतः। नागेशवृत्तावपि प्रतीकपाठ एवमेव। परन्तु वृत्त्यवलोकनेन चितिशक्तिः इत्येव नागेशस्याभिमतमिति ज्ञायते।

५. स एष पूर्वेषामपि० इति पाठो विज्ञानभिक्षु-भावागणेश-नागेशानाम्। विवरणकार-भोजानन्तदेवानां मते तु स पूर्वेषामपि० इति पाठः।

---

१. ···शैथिल्यानन्त्य० इति विवरणभोजवृत्तिपाठः । अनन्तदेवेन चायं पाठभेदः चन्द्रिकायामुपन्यस्तोऽर्थभेदपुरस्सरम् ।

२. ····सर्वं सर्वनिमित्तानपेक्षम् इति पाठः क्वचिदुपलब्धोऽपि न युक्तः, सर्वनिमित्तापेक्षमनोमात्रजन्यं यथार्थज्ञानं प्रतिभा इति मणिप्रभोद्धृतराजवार्त्तिकव्याख्यानात् ।

---

१. ···संहननानि० इति विज्ञानभिक्षुभावागणेशानन्तदेवसम्मतः पाठः ।

२. विविक्तः इति भोजराज-विवरणकारसम्मतः पाठः ।

३. ···स्मितानुगमात् इति भिक्षु-भावागणेश-नागेशमतम् । रूपपदन्त्व-प्रामाणिकम् इत्यपि भिक्षुः ।

४. ···भावनाविनिवृत्तिः इति मणिप्रभा-योगसुधाकरसम्मतः पाठः । नागेश-वृत्तावपि अयमेव प्रतीकपाठः ।

५. अत्र मनसः इति विवरणकारमते न सूत्राङ्गम् । भोजवृत्तावप्येतद्रहित-मेव पठ्यते ।

६. भोजवृत्त्यवलोकनेन क्लिष्टा अक्लिष्टाः इति व्यस्तः पाठः प्रतीयते ।

१. श्रौतानुमान० इति अनन्तदेवसम्मतः पाठः ।

२. अत्र दीर्घकालादर० इति पाठः क्वचिन्मुद्रितोऽपि नैकयाऽपि व्याख्ययाऽनुमोदितः ।

३. इतिशब्दान्तं सूत्रम् इति वाचस्पतिविवरणकारी । अन्येषामसम्मतमिदम् । वार्त्तिके पाठभेदत्वेन उल्लिखितम् ।

४. ···प्रत्ययाऽविशेषाद् भोगः इति भोजवृत्तिचन्द्रिकयोः पाठः । परार्थात्स्वार्थ० इत्यस्य स्थाने परार्थान्यस्वार्थ० इत्यपि भोजवृत्तौ पठितम् ।

५. ···सौमनस्यैकाग्रतेन्द्रिय० इति भोजसम्मतः पाठः ।

६. ·· पुरुषस्याऽपरिणामात् इति वार्त्तिक-चन्द्रिकयोः ।

७. अनुत्तमः सुखलाभः इति क्वचित् पाठान्तरम् ।

८. ···प्रज्ज्वलनम् इति भोज-भावागणेश-नागेशानन्तदेवसम्मतः पाठः ।

९. सुखानुजन्मा० इति विवरणपाठः । तत्र प्रकृतपाठोऽपि पाठान्तरतयोपन्यस्तः ।

---

१. एतत्सूत्रानन्तरम् नागेशवृत्तौ दिनमाससम्वत्सराः इत्यधिकं सूत्रमुपलभ्यते।

२. स्थान्युपमन्त्रणे० इति विवरणे। स्वाम्यु-पनिमन्त्रणे० इति भोजदेवानन्तदेवौ।

३. ···विदुषोऽपि तन्वनुबन्धो० इति अनन्तदेवकृतचन्द्रिकासहितपुस्तके पाठः। भोजवृत्त्यवलोकनेन ··विदुषोऽपि अन्वहमनुबन्धो० इति पाठः प्रतीयते।···विदुषोऽपि अन्वहं तन्वनुबन्धो० इति पाठोऽपि भोजाभिमतः स्यात्!

····तथाऽऽरूढो० इति योगसुधाकरसम्मतः पाठः।

४. क्वचित् चित्तस्वरूपानुकार० इति समस्तः पाठः।

द्वितीयं परिशिष्टम्

# व्यासभाष्यस्थोद्धरणानुक्रमणी



---

१. एतत्सन्दिग्धमिदमावट्यस्य स्वकीयं वाक्यम्, तदर्थमादाय भाष्यकृद्वचनं वा । एवमेव अन्यस्मिन्नपि आवट्यजैगीषव्यसम्वादान्तर्गतवाक्यविषयं ज्ञेयम् ।

---

१. कालवृत्तशाखास्थेयं श्रुतिरिति वार्त्तिकम्।

२. इयं वैयासकी गाथेति तत्त्ववैशारदी। भाष्यकारपितुः पराशरस्य वाक्यमिति वार्त्तिकम्। पराशरकृते विष्णुपुराणे चोपलभ्यते।

तृतीयं परिशिष्टम्

## तत्त्ववैशारदी-निर्दिष्टानाम् उद्धरणानाम् अनुक्रमणी ।

———

१. अत्रार्थे वार्त्तिकोद्धरणानुक्रमणी द्रष्टव्या ।

चतुर्थं परिशिष्टम्

# योगवार्तिकस्थानामुद्धरणानामनुक्रमणी



---

१. वार्तिके बहवः श्लोकाः वसिष्ठसंहितात उद्धृताः । मन्ये योगवासिष्ठस्यैते स्युः । परन्तु एषां स्थानं नाल्पे समये लब्धमिति क्षन्तव्यम् सुधीभिः । योगयाज्ञवल्क्यादौ चैते श्लोकाः पाठभेदेनाल्पेन दृश्यन्ते, अन्यत्रापि सुलभाः ।

---

१. अत्र अश्वमेधपर्वगतः ३५।२० श्लोको द्रष्टव्यः ।

२. इयं श्रुतिः बहुत्रोद्धृता । छान्दोग्यस्य (६।३।२।) भाष्ये शंकराचार्येण काठकश्रुतिरित्युक्तम् । परन्तु सम्प्रति कठोपनिषदि नोपलभ्यते ।

---

१. अस्य पूर्वार्द्धमात्रमुपलभ्यते।

२. इयं श्रुतिरधुना नोपलभ्यते,एतत्समानवाक्यं च लभ्यते।

३. अस्योत्तरार्धे महान् भेदः।

२. एते श्लोकाः वायुपुराणस्य ६६।४३,४४ श्लोकसमानार्थाः। अग्रिमश्लोकास्तु पुराणान्तरेष्वुपलभ्यन्ते इति यथास्थानं निवेदितम्।

---

१. प्रथमैव पंक्तिः मनौ उपलभ्यते । सापि पाठभेदपूर्विकैव ।

२. इयं नैका श्रुतिः, अपि तु सङ्कलिता श्रुतिः ।

३. सांख्यसारस्य [ श्लोक-१६ ] अवलोकनेन अयमपि श्लोको वशिष्ठत एवोद्धृत इति ज्ञायते ।

१. अयं श्लोको मनुनाम्नोद्धृतोऽपि तत्र सम्प्रति नोपलभ्यते ।

---

१. अत्र तदत्यन्त····इत्येव मूलपाठः। तत्र तदिति दुःखार्थकम्।

२. अत्र गरुडपुराणे महान् पाठभेदो दृश्यते। स तत एवावधार्यः।

३. अयं श्लोकः गौडपादीमागमशास्त्रे (२।३२) त्रिपुरतापिन्युपनिषदि च (५।१०) दृश्यते॥

---

१. अयं न्यायः निर्विशेषं न सामान्यमिति श्लोकवार्त्तिकानुसारी । द्र०—श्लोकवार्त्तिकम् , आकृत्यधिकरणे १० श्लोकः ।

---

१. अत्र विष्णुपुराणे प्रधानपुरुषौ चैव······इति मुद्रितः पाठः ।

१. उद्धरणद्वयमप्येकमेव प्रतीयते । परन्तु ईषत्पाठभेदात्पृथक् स्थापितम् ।

---

१. पाठभेदः सहोपलभ्यते ।

२. किमपि स्मृतिवाक्यमेतत् ?

---

१. क्लेशः इति मूलपाठो भिक्षुसम्मतम् प्रवचनभाष्ये ।

१. अयं श्लोकः माघशुक्लसप्तम्यां स्नानमन्त्ररूपेण निबन्धेषु दृश्यते ।

२. अस्योत्तरार्धं न लभ्यते पुराणे सम्प्रति ।

३. अयं श्लोको बलिप्रदानार्थं पशूत्सर्गसमये कर्मकाण्डग्रन्थे मन्त्ररूपेण दृश्यते ।